# विक्रेयाणि संस्कृतपुस्तकानि ।



| | कि. रु. | ट. |
|---|---|---|
| कारिकावली—न्यायमुक्तावलीसंवलिता दिनकरीव्याख्या-रामरुद्रीव्याख्यायुता .... .... | २॥ | ॥॰ |
| कारिकावली—( सिद्धांतमुक्तावलीसहिता ) .... | ॥॰ | ८- |

## गादाधरीपञ्चलक्षणी ।

### चिन्तामणि-दीधिति-गादाधरी-कृष्णंभट्टीय-न्यायरत्नेति न्यायपञ्चग्रन्थीसंग्रहः । सिंहव्याघ्रलक्षणसार्वभौमपरिष्कारोपतः ।

**मूल्यं १॥ प्रापणव्ययः २ कले.**

इयं न्यायशास्त्रे प्रधानभूता प्राचीनपुस्तकेभ्यः परिशोध्य पाठान्तरैरलंकृत्य विद्यार्थिनां सुबोधाय मुद्रिता ।

| | कि. रु. | ट. |
|---|---|---|
| तर्ककौमुदी—लौगाक्षिभास्करकृता .... .... | ८= | ८॥ |
| तर्कसंग्रहः—न्यायबोधिनी-पदकृत्यव्याख्याटिप्पणी.... | ।= | ८- |
| तर्कसंग्रहचंद्रिका—(महामहोपाध्यायश्रीमदन्नंभट्टकृत तर्कसंग्रहव्याख्या ) पं० मुकुन्दशर्मकृता .... | ।= | ८- |
| न्यायलीलावती—श्रीमद्वल्लभाचार्यविरचिता .... | ॥।॰ | ८= |
| प्रमेयकमलमार्तंडः—( चन्द्रप्रभाचार्यविरचितः ) .... | ४ | ॥॰ |
| भास्करोदया—तर्कसंग्रहदीपिकाप्रकाशव्याख्या .... | ॥।= | ८= |
| भाषापरिच्छेदः—मैथिल-मुकुन्दझा प्रणीतः कारिकावली ( अर्थदीपिकासहितः ) .... .... | ॥॰ | ८= |
| नाट्यशास्त्रं—श्रीभरतमुनिप्रणीतम् .... .... .... | ३ | ।॰ |
| मन्दारमरन्दचम्पूः—श्रीकृष्णकविकृता .... .... | १। | ८= |

| | मू. | मा. व्य. |
|---|---|---|
| **अद्वैतसिद्धिः**—मधुसूदनीया. ... ... ... ... ... | १० | १ |
| **उपदेशसाहस्री**—गद्यपद्योभयभागात्मिका । ... ... ... | १॥ | ०।० |
| **अद्वैतरत्नरक्षणम्**—मधुसूदनीयम् ... ... ... ... | ०॥= | ऽ= |
| **अनुभूतिप्रकाशः**—विद्यारण्यस्वामिकृतः. ... ... ... | १ | ऽ- |
| **अष्टाविंशत्युपनिषदः**—( गुटका, उपनिषदः २८ ) ... ... | १ | ऽ= |
| **अष्टोत्तरशतोपनिषदः**. ... ... ... ... ... | २॥ | ०।० |
| **ललितोपाख्यानम्**—ब्रह्माण्डपुराणोत्तरखंडगतं अध्यायाः ४० | १। | ०।० |
| **पातञ्जलयोगसूत्रम्**—भावागणेशवृत्ति-नागोजीभट्टीयवृत्ति-सहितम् ... ... ... ... ... ... ... | ०॥।० | ऽ= |
| **मंत्ररत्नमंजूषा**—श्रीमत्त्रिविक्रमभट्टारकप्रणीता. ... ... | ०॥० | ऽ= |
| **ललितासहस्रनाम**—भास्कररायप्रणीतसौभाग्यभास्करभाष्य-सहितम् ... ... ... ... ... ... ... | १॥। | ०।० |
| **तत्त्वप्रदीपिका-चित्सुखी**—श्रीमच्चित्सुखाचार्यमुनिविरचिता. | ३ऽ= | ०।= |
| **पञ्चदशी**—रामकृष्णविरचितव्याख्यासहिता. ... ... ... | १ | ऽ= |
| **ब्रह्मसूत्रशांकरभाष्यम्**—भामती-कल्पतरु-परिमलव्याख्या-सहितम् ... ... ... ... ... ... ... | १० | ०॥= |
| **ब्रह्मसूत्रशाङ्करभाष्यम्**—मूलमात्रं, सटिप्पणम् ... ... | २। | ०।० |
| **श्रीमद्भगवद्गीता**—( व्याख्याष्टक ८ मण्डिता । ) ... ... | ८। | १ |
| **भगवद्गीता**—शंकरानन्दीव्याख्यासहिता. ... ... ... | २। | ०।० |
| **वेदस्तुतिः**—श्रीधरीयटीका व्याख्यासहिता. ... ... ... | ०॥।० | ऽ= |
| **निरुक्तलघुविवृत्तिः**—[ सप्तपादिका ] ... ... ... | ०॥।= | ऽ= |
| **अमरकोशः**—अमरसिंहकृतः, भानुजीदीक्षितकृतव्याख्यासुधा ( रामाश्रमी ) टीकासहितः ... ... ... ... ... | ४। | ०॥० |
| **अमरकोशमूलं**—शब्दकोशसहितम्. ... ... ... ... | ०॥≡ | ऽ- |
| **अमरकोशः सटीकः**—शब्दकोशसहितः. ... ... ... | ०॥।= | ऽ-॥ |
| **शब्दभेदप्रकाशः**—शब्दद्वैधकोशः **एकाक्षरकोशश्च.** ... | ऽ- | ऽ॥ |

निर्णयसागरयन्त्रालयाधिपतिः

**पांडुरंग जावजी,**

कालकादेवीरोड, **मुंबई.**

# MÂDHAVANIDÂNA.

BY

## MÂDHAVAKARA,

with the Commentary Madhukosha

BY

## VIJAYARAKSHITA & SHRÎKAṆTHADATTA.

AND COMMENTARY OF ÂTANKADARPAṆA, BY VÂCHASPATI VAIDYA.

---

First Edition—3000 COPIES.

---

EDITED BY

VAIDYA JÂDOWJÎ TRICUMJÎ ÂCHÂRYA,

EDITOR OF ÂYURVEDÎYA GRANTHA-MÂLÂ.

---

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRNAYA-SÂGAR" PRESS,

BOMBAY.

---

1920.

---

*Price 3 Rupees.*

महामतिश्रीमाधवकरप्रणीतं

# माधवनिदानम् ।

महामहोपाध्याय-श्रीविजयरक्षित-श्रीकण्ठदत्ताभ्यां विरचितया मधुकोशाख्यव्याख्यया तथा श्रीवाचस्पति वैद्यविरचितया आतङ्कदर्पणव्याख्यया च समुल्लसितम् ।

आयुर्वेदीयग्रन्थमालासंपादकेन

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा संशोधितम् ।

प्रथमं संस्करणम् ।

मुम्बय्याम्

पांडुरंग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

शके १८४२ वत्सरे, सन १९२०

मूल्यं ३ रूप्यकाः ।



# भूमिका ।



विमलविपुलबुद्धिरिन्दुकरात्मजः श्रीमाधवकरश्चरकसुश्रुतविदेहवाग्भटादीनामनेकतन्त्राणां वचनानि संगृह्य **माधवनिदान**मितिनाम्ना प्रसिद्धं रोगविनिश्चयाख्यमिमं ग्रन्थं निर्मितवान् । अस्मिन् ग्रन्थे आयुर्वेदोक्तानां प्रायः सर्वेषां रोगाणां निदानपूर्वरूपरूपोपशयसंप्राप्त्युपद्रवसाध्यासाध्यविचारप्रभृतयो विषयाः संक्षेपेणातिस्पष्टतयोपवर्णिताः । अयं च मन्दबुद्धीनामल्पेनापि परिश्रमेण रोगसमूहज्ञानसंपादनविधावद्वितीयो वरीवर्ति । भिषजामतीवोपयुक्तोऽयं ग्रन्थः, यदिमं भिषजः सर्वदा कण्ठोपस्थितमेव परिरक्षन्ति, अस्य च निर्मलज्ञानेन रोगसमूहान्विनिर्णयन्ति । अस्य महतीं लोकोपयोगितां निरीक्ष्य विद्वद्भिर्भिषग्भिर्बह्व्यष्टीका व्यरचिषत । यासु मधुकोशातङ्कदर्पणाख्ये द्वे टीके समुपलभ्येते । विमलविपुलबुद्धिः श्रीमाधवकरष्टीकाकारः श्रीविजयरक्षितः श्रीकण्ठदत्तश्च कस्मिन् समये कतमं जनपदं जन्मना अलंचकारेति दृढेन प्रमाणेन निश्चेतुमतीव दुःशकम् । किंतु श्रीगोपीमोहनकविराजकृतमुक्तावल्याख्यग्रन्थस्थेन "पूर्वं लोकहिताय माधवकराभिख्यो भिषक् केवलं कोषान्वेषणतत्परः प्रविततायुर्वेदरत्नाकरात् । मालां रत्नमयीं चकार स यथालाभं न शोभाधिका साऽस्माभिः कमनीयभक्तिरचनद्वाराऽन्यथा ग्रथ्यते" इति पद्येनैतावदेव निश्चीयते यत् माधवकरो निदानातिरिक्तं रत्नमालाभिधमन्यमपि ग्रन्थं निर्मितवानिति । अयं च माधवकरो वेदभाष्यकर्तुः सायणोपनामकात् माधवाचार्यतो भिन्न एवेति इतिहासवेत्तॄणां सुविदितमेव । मधुकोशव्याख्याव्यतिरिक्तः श्रीविजयरक्षितविरचितोऽन्यग्रन्थो न क्वाप्युपलभ्यते । श्रीकण्ठदत्तेन वृन्दकृत**सिद्धयोगा**ख्यग्रन्थोपरि **कुसुमावल्य**भिधाना व्याख्या प्रणीता, येदानीं पुण्यपत्तने आनन्दाश्रमग्रन्थावल्यां मुद्रिताऽस्ति । पुस्तकस्यास्य शुद्धिकरणार्थं मत्संग्रहे मधुकोशव्याख्यासहितमाधवनिदानस्यैकं हस्तलिखितं शुद्धं पुस्तकमासीत्, तस्य तथा आतंकदर्पणव्याख्याया एकं हस्तलिखितं पुस्तकं अस्मत्परमसुहृदां स्व. व. वैद्य मुरारजी नथुभाई इत्येतेषां पुस्तकसंग्रहात्प्राप्तं च साहाय्यमवलम्बितं, संदेहस्थलेषु चरकसुश्रुतादीन् ग्रन्थानवलोक्य निश्चिताः पाठभेदाः, मुद्रितपुस्तकेषु यत्र क्वचिन्मूलातिरिक्तः पाठ उपलब्धः स प्रक्षिप्त इति मत्वा ( ) एतादृक्चिह्नमध्ये संनिवेशितः, ग्रन्थादौ माधवनिदानान्तर्गतानां विषयाणामनुक्रमणिका संयोजिता, तथा मधुकोशव्याख्यायां प्रमाणतयोपन्यस्तानां ग्रन्थग्रन्थकर्तॄणां

तत्तत्स्थानोल्लेखपूर्वकं नामानि, तथा संप्रति भारतवर्षे यावन (युनानी) चिकित्साया आङ्ग्लचिकित्सायाश्च प्रचारबाहुल्यात् माधवनिदानोक्तानां रोगाणां यथोपलब्धानि अरबीभाषया आङ्ग्लभाषया च पर्यायनामानि संनिवेशितानि । एवं पुस्तकस्यास्य शुद्धिं विधाय निर्णयसागरयन्त्रालयाधिपतये 'पाण्डुरङ्ग जावजी' इत्यभिख्यया प्रसिद्धाय श्रेष्ठिने दत्तमिदं पुस्तकं, तेन च स्वकीये निर्णयसागर-यन्त्रालये मुद्रयित्वा प्राकाश्यं नीतम् । एवं महता यत्नेन संपादितेऽस्मिन्कार्ये भ्रमेण प्रमादेन वा जातं स्खलनं क्वचिद्दृश्येत, तर्हि गुणैकपक्षपातिभिर्विद्वद्भिः क्षन्तव्यं, सफलयितव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेत्यभ्यर्थ्यते ।

होलीचकला }
फोर्ट, मुंबई. }

भिषजामनुग्राह्यो
**यादवशर्मा ।**

# माधवनिदानोक्तानां रोगाणां अरब्बीभाषायां आङ्ग्लभाषायां च नामानि ॥

| | | |
|---|---|---|
| ज्वर | हुम्मा | Fever फीवर. |
| सामान्यज्वर | हुम्मा योमी | Febricula फेब्रिक्युला. |
| सन्निपातज्वर | Typhoid Type. | Typhoid, Typhus, Yellow fever, Relapsing fever, Pneumonia, plague and other poisonous fevers. |
| विषमज्वर | हुम्मा खिलतिया | 1 Remittent रिमिटन्ट. 2 Enteric Fever एन्टेरिक. |
| सन्ततज्वर | हुम्मा दायमी | Continued fe. कंटिन्यूड फिवर. |
| सततज्वर | | Remittent Fe. रिमिटन्ट् फिवर. डबल कोटिडियन् फिवर. Malarial fever मॅलेरियल फिवर. |
| अन्येद्युष्कज्वर | | Quotidian Fe. कोटिडियन् फि. मलेरियाचा प्रकार. |
| तृतीयकज्वर | हुम्मा गिब खालिस दायरा | Tertian Fever टर्शियन् फिवर. |
| चतुर्थकज्वर | हुम्मा राबेआ | Quartan Fever क्वार्टन् फिवर. |
| चातुर्थक-विपर्यय | | Double quartan डबल क्वार्टन्. |
| अभिघातज्वर | हुम्मा जरबी | Traumatic fever ट्रॉम्याटिक फि. |
| विदाहज्वर | हुम्मा वरमी | Inflammatory fe. इन्फ्लमेटरी फि. |
| सूतिकाज्वर | हुम्मा झचगी | Puerperal fever प्युर्पिरल फिवर. |
| स्तन्योत्थज्वर | | Milk fever मिल्क फिवर. |
| अतिसार | इसहाल | Diarrhœa डायरिया. |
| आमातिसार | झहीर | Muco-colitis म्युको कोलायटिस. |
| प्रवाहिका | इसहाल उल दम | Dysentery डिसेन्ट्री. |
| ग्रहणी | झलक उल अमआ | Duodinal Diarrhœa. डिओडिनल डायरिया. |
| अर्श | बवासीर | Piles, Hæmorrhoids पाइल्स; हिमरॉइड्स. |
| रक्तार्श | बवासीर उल दम | Bleeding piles ब्लीडिंग पाइल्स. |
| अग्निमान्द्य | जोफ उल मेअदा | ( Dyspepsia डिस्पेप्शिया. ) Loss of Appetite. लूस ऑफ एपिटाईट. |
| अजीर्ण | तुख्मा | Indigestion इन्डिजेशन. |

| | | |
|---|---|---|
| विसूचिका | हैजा | Cholera कॉलेरा. |
| आध्मान | नफ्ख | Tympanitis टिम्पेनाइटिस. |
| कृमि | दीदान उल अमआ | Worms वर्म्स. |
| पाण्डुरोग | | Anæmia ॲनिमिया. |
| रक्तपित्त | | Hæmorrhagic diseases हिमॉऱ्हेजिक डिसीझिस्. Scurvy स्कर्व्हि. |
| कामला | यरकान अस्फर | Jaundice जॉन्डिस. |
| हलीमक | यरकान असवद | Clorosis क्लोरोसिस. |
| राजयक्ष्मा | दुम्मा दिक | Phthisis, consumption, Pulmonary tuberculosis थायसिस, कंझम्प्शन, पल्मनरी ट्युबर्क्युलोसिस. |
| उरःक्षत | सिल | Bronchiectasis. ब्रॉंकिएक्टॅसिस. Cavitation. |
| कास | सोआल | Cough कॉफ. |
| हिक्का | फवाक | Hiccup, हिकप्. |
| श्वास | रिबु, जीक उल नफ्स | Dyspnœa, Asthma डिस्प्निया, आस्थमा. |
| स्वरभङ्ग | फसाद उल सोत | Hoarseness होर्सनेस्. |
| अरोचक | | Loss of taste. Anorexia ॲनोरेक्झिआ. |
| छर्दि | के | Vomiting, व्हॉमिटिंग. |
| तृषा | अतश मुफरत | Thirst, थर्स्ट. |
| मूर्छा | गशी | Cyncopy, fainting, सिंकपी, फेन्टिंग. |
| भ्रम | सदर, दवार. | Giddiness, गिडिनेस. |
| सन्यास | सक्ता | Apoplexy ॲपॉप्लेक्सी. Catalepsy. कॅटॅलेप्सी |
| मदात्यय | खुम्र | Alcoholism, अल्कॉहालिझम्. |
| उन्माद | जनुन | Mania, Insanity. मॅनिया, इन्स्यानिटी. |
| अपस्मार | सरआ | Epilepsy, एपिलेप्सी. |
| आक्षेपक | तशन्नुज | Convulsions, कन्व्हल्शन्स्. |
| धनुःस्तम्भ | | Tetanus, टिटेनस्. |
| पक्षवध | इस्तिरखा, फालीज | Hemiplegia, हेमिप्लेजिआ. |
| अर्दित | लकवा | Facial Paralysis, फेशियल प्याऱ्यालिसिस्. |

| | | |
|---|---|---|
| मन्यास्तम्भ | इस्तिरखाय् उल चम्बर | Torticolis, Wry neck. टॉर्टिकॉलिस्, राय नेक. |
| जिह्वास्तम्भ | इस्तिरखाय् उल लसान | Paralysis of Tongue, Glosal palsy. प्यारालिसिस् ऑफ टंग; ग्लॉसल् पॅल्सी. |
| पादहर्ष | खदिर | Anæsthesia ॲनिस्थेसिआ. |
| ऊरुस्तम्भ | इस्तिरखाय् उल फख्झ | Paraplegia प्याराप्लेजिआ. |
| अंतरायाम | | Emprosthotonis एम्प्रोस्थोटोनि॰ |
| बाह्यायाम | | Opisthotonis ओपिस्थोटोनिस. |
| हनुग्रह | | Dislocation of the lower jaw. डिस्लोकेशन् ऑफ दि लोअर जॉ. |
| खञ्ज<br>पङ्गु | | Paraplegia. |
| अंगशोष | | Osteoarthritis of the shoulder joint ऑस्टिओआर्थ्रिटिस ऑफ दि शोल्डर जॉइंट. |
| अपतानक | | Hystem bajor हिस्टेम बजोर. |
| दंडापतानक | | Hystem bajor हिस्टेम बजोर. |
| क्रोष्टुकशीर्ष | | Synovitis of Knee Joints. सायनोव्हाइटिस् ऑफ् नी जॉइन्ट्स्. |
| वेपथु | राअशा | Paralysis Agitans प्यारालिसिस् ॲजिट्यान्स. |
| अंपतन्त्रक | इख्तनाक उल रहम | Hysteria Minar. हिस्टेरिया मायनर. |
| सर्वाङ्गवात | | General Paralysis जनरल प्यार्‍यालिसिस्. |
| गृध्रसी | अरकुन्निशा | Sciatica. सायाटिका. |
| विश्वाची | इस्तिरखाय् उल यद | Arm Palsy. |
| मूकत्व | बुकम | Dumbness. ॲफेजिया अग्रेशिया. |
| वातरक्त | | Gout गाऊट. |
| ओष्ठभेद | शक उल शिफतेन | Chopping of Lip चॉपिंग ऑफ् लिप्. |
| दन्तभेद | शक उल असनान. | |
| नखभेद | शक उल अझफार. | Onychia ऑनिकिया. |
| अरसज्ञता | बुतलान उल झोक. | |
| घ्राणनाश | खशम | Destruction of The Sense of Smell डिस्ट्रक्शन् ऑफ् धी सेन्स् ऑफ् स्मेल. |

| | | |
|---|---|---|
| जृम्भा | तशाऊब | Yawning यॅानिंग. |
| अस्वप्न (निद्रानाश) | सहर | Insomnia इन्सॉम्निया. |
| अतिप्रलाप | हीझयान् | Delirium डिलिरियम्. |
| आमवात | वजअ ऊल् मुफासील | Rheumatism रुमॅटिझम्, |
| शूल | वजअ उल मेअदा | Colic ( neuralgia ? ) कॉलिक् ( न्युऱ्याल्जिया ? ). |
| हृद्रोग | वजअ उल कल्ब | Diseases of the Heart. अॅन्जाइना पेक्टोरिस्, कॉर्डियाल्जिया. |
| अम्लपित्त | | Acid dyspepsia अॅसिड डिस्पेशिया. |
| उदावर्त | | Intestinal obstructian, इन्टेस्टैनल ऑबस्ट्रक्शन. |
| गुल्म | | Abdominal tumour. अॅब्डॉमिनल ट्युमर. |
| रक्तगुल्म | रिजा | Ovarian tumour ऑव्हेराइन ट्युमर. |
| मूत्रकृच्छ्र | तकतीर उर बौल | Dysuria डिस्यूरिया. |
| मूत्राघात | एहतेबास उल बौल | Dysuria डिस्यूरिया. |
| वातकुण्ड-लिका | | Spasmodic stricture स्पॅस्मॉडिक स्ट्रिक्चर. |
| अष्ठीला | | Enlargement of Prostate एनलार्जमेन्ट ऑफ प्रोस्टेट. |
| वातबस्ति | | Retention of urine रिटेन्शन ऑफ यूरिन. |
| मूत्रातीत | इस्तिरखाय् उलमसाना | Incontinence इन्कोन्टिनन्स. |
| मूत्रजठर | इन्तिफाख उल मसाना | Distended bladdar डिस्टेन्डेड ब्ल्याडर. |
| मूत्रोत्संग | | Stricture of Urethra स्ट्रिक्चर ऑफ यूरेथ्रा. |
| मूत्रक्षय | | Supression of Urine सप्रेशन ऑफ यूरिन. |
| मूत्रग्रन्थि | | Tumour of the bladder ट्यूमर ऑफ धि ब्ल्याडर. |
| मूत्रसाद | | Cystitis सिस्टायटिस्. |
| विड्विघात | | Vesico-Intestinal Fistula व्हेसायको इन्टेस्टायनल् फिश्चुला. |
| बस्तिकुण्डल | | Atony of bladder एटनी ऑफ ब्ल्याडर. |

| | | |
|---|---|---|
| अश्मरी | हीसआत | Calculus क्यॅल्क्युलस. |
| शर्करा | रमल | Gravel ग्रॅवल. |
| प्रमेह | जीरयान | Diseases of the urinarojaves डिजिझिझ् ऑफ धी युरिन. |
| उदकमेह | | Diabetes Insipidus डायाबिटिस इन्सिपिडस. |
| पिष्टमेह | | Chylurea कायल्यूरिया. |
| हस्तिमेह | | Anueresis ॲन्युरेसिस. |
| लाला-वसा-मज्जा-मेह | | Albuminuria ॲल्ब्यूमिन्यूरिया. |
| रक्तमेह | बौल उल दम | Hæmaturea ह्रिमॅट्युरिया. |
| शुक्रमेह | जीरयान मनी | Spermatorrhœa स्पर्म्याटोऱ्हिया. |
| मधुमेह | झयाबीतुस | Diabotes Mellitus, डायाबिटिस् मेलिटस्. |
| प्रमेहपिडिका ( विनता ) | | Carbuncle कार्बन्कल. |
| मेदोवृद्धि | समन मुफरत | Obesity, ओबेसिटि. |
| ऊर्ध्ववात | | Eructation. |
| प्रत्यष्ठीला | | Ovaritis. |
| वाताष्ठीला | | Typhitis. |
| प्लीहोदर | वरम उल तिहाल | Splenitis, splenic enlargement स्प्लिनायटिस, स्प्लेनिक् एन्लार्जमेन्ट. |
| यकृद्दाल्युदर | वरम उल कबिद | Hepatitis, Hepatic enlargement हेपेटाइटिस, हेप्याटिक् एन्लार्जमेन्ट. |
| जलोदर | इस्तिस्का | Ascites एसायटिस. |
| शोथ | वरम | Swelling,Dropsy,Anasarca स्वेलिंग, ड्रॉप्सी, ॲनासार्का. |
| क्षतोदर | कुरुह उल अमआ | Ulceration of the bowel अलसरेशन ऑफ धी बावेल. |
| मूत्रजवृद्धि | किल्लतुल मेआ | Hydrocele हाइड्रोसिल. |
| दोषजवृद्धि | वरम उल उन्सियेन | Orchitis ऑरकायटीस. |
| रक्तजवृद्धि | | Hæmatocele ह्रिमॅटोसिल. |
| मेदोजवृद्धि | अझीम उल उन्सियेन | Elephantiasis of Scrotum एलिफन्टिॲसिस ऑफ स्क्रोटम. |
| अन्त्रवृद्धि | किल्लतुल अमआ | Hernia हर्निया. |

| | | |
|---|---|---|
| गलगण्ड | | Goitre, Bronchocele ग्रॉयटर, ब्रॉन्कोसिल. |
| गण्डमाला | खनाझीर | Scrofula, स्क्रॉफ्युला. |
| मेदोर्बुद | | Fatty tumour फॅटि ट्यूमर. |
| मांसार्वुद | सरतान | Myoma मायोमा. |
| अर्बुद | बशूर | Malignant growth मेलिग्नन्ट [ ग्रोथ. |
| ग्रन्थि | सलआ | Tumour ट्यूमर. |
| श्लीपद | दाय् उल फील | Elephantiasis एलिफन्टीअँसिस्. |
| विद्रधि | दुबेला | Abscess ॲब्सेस्. |
| व्रणशोथ | आवला | Inflammation इन्फ्लमेशन् ऑफ् वुन्ड. |
| शारीरव्रण | | Idiopathic Ulcer इडियोप्यथिक् अल्सर. |
| सद्योव्रण | | Traumatic Wound ट्रोमेटिक [ वुन्ड. |
| छिन्न | | Cut wound, कट् वुन्ड. |
| भिन्न | | Rupture रप्चर. |
| विद्ध | | Punctured wound पंकचर्ड वुन्ड. |
| क्षत | | Contused wound कन्टूव्ज्ड वुन्ड, |
| पिच्चित | | Compound fracture कॉम्पाउन्ड फ्रॅक्चर. |
| घृष्ट | | Excoriation एक्सकोरिएशन. |
| अस्थिभग्न | कस्र | Fracture फ्रॅक्चर. |
| सन्धिविश्लेष | खलआ | Dislocation डिस्लोकेशन्. |
| नाडीव्रण | नासूर | Sinus,Fistula सायनस्,फिस्चुला. |
| भगन्दर | नवासीर | Fistula in Ano फिस्चुला इन् एनो. |
| लिङ्गार्श | शालील उल कुजिब | Chancre of the Penis शँकर ऑफ धी पेनिस. |
| महाकुष्ठ | जुझाम | White Leprosy, लेप्रसि. |
| सिध्म | खल्फ | Cloasme, क्लोआज्मा. |
| चर्मकुष्ठ | | Zeroderma, झेरोडर्मा. |
| किटिभ | | Psoriasis, सोरायसिस्. |
| वैपादिककुष्ठ | | Rhajades, =हेजेड्स. |
| अलसक | | Lichen, लीचेन्. |
| कच्छु | | Scabies, Itch स्केबीस, इच. |
| विस्फोटक | | Impetigo, इम्पेटिगो. |
| शतारुकुष्ठ | | Rupia, रुपिया. |

| | | |
|---|---|---|
| विचर्चिका | | Pemphigus, पेंफीगस्. |
| दद्रु | कुबा | Ringworm रिंगवर्म. |
| किलास | वरस अविजय | Leucoderma ल्युकोडर्मा. |
| पामा | जर्ब | Eczema एग्झीमा. |
| विसर्प | हुमरा | Erythema एरिथीमा. |
| शीतपित्त | | Urticaria, अर्टिकेरिया. |
| ग्रन्थिविसर्प | | Erythema-Nodozum एरीथिमा-नोडोझम्. |
| कर्दमविसर्प | | Phlegmonous Erysipelas फ्लेग्मोनस एरिसिपेलस. |
| क्षतविसर्प | | Traumatic erysipelas ट्रॉम्याटिक एरिसिपेलस. |
| मसूरिका | जुदरी | Small Pox स्माल पॉक्स. |
| इन्द्रलुप्त | इन्तशार उल शअर | Falling of Hair, Baldness फॉलिंग ऑफ हेर, बॉल्डनेस. |
| पलित | शेब | Premature grey hair प्रिमेच्युअर ग्रे हेअर. |
| मुखदूषिका | बशूर उल लुबन | Acne ॲक्नी. |
| रोमान्तिका | | Measles, मीझल्स. |
| मषक | शालील | Warts वार्ट्स. |
| गुदभ्रंश | खरुज उल मुकअद | Prolapsus Ani प्रोल्याप्सस एनाय |
| तिलकालक | खाल | Mole मोल. |
| चिप्प | दाखस | Whitlow व्हिट्लो. |
| सन्निरुद्धगुद | | Stricture of the Rectum स्ट्रिक्चर ऑफ् धी रेक्टम. |
| कक्षा | | Boil बॉइल. |
| कदर | | Corn कॉर्न. |
| निरुद्धप्रकश | | Phimosis फायमोसिस. |
| परिवर्तिका | | Paraphimosis प्याराफायमोसिस. |
| अहिपूतना | हक उल मुकअद | Pruritus anii प्रुरायटस एनाय. |
| उपदंश | जुम्राह | Soft chancre सॉफ्ट शांकर. |
| फिरङ्गोपदंश | | Hard chancre, syphilis हार्ड शांकर, सिफिलिस. |
| खलिवर्धन | असनान उल झायदा | Extra Tooth एक्स्ट्रा टुथ. |
| दन्तनाडी | कुरूह उल लशा | Sinus in the Gum सायनस इन् धी गम. |
| क्रिमिदन्तक | दीदान उल लशा | Caries of Tooth कॅरिझ ऑफ् टुथ. |

| | | |
|---|---|---|
| दन्तहर्ष | जर्स | Irritation in the Tooth इरिटेशन् इन् धी टुथ. |
| दन्तशर्करा | ह्जर | Tartar टार्टर. |
| श्यावदन्त | | Black or Necrosed Tooth ब्ल्याक आर निक्रोझ्ड टुथ. |
| कण्ठशुण्डी | | Elongated Uvula एलोंगेटेड युव्हुला. |
| उपजिह्वा | ज(द)फ्दू उल लसान | Ranulla ऱ्यान्युला. |
| मुखरोग | | Stomatitis स्टोमेटाइटिस्. |
| कर्णनाद | तनीन, वदी | Noises in the Ear नॉयझेस् इन् धी इअर. |
| कर्णस्राव | इन्फजार उल उझल | Otorrhea ओटोऱ्हिआ. |
| कर्णशूल | वजअ उल उझन | Otitis, Otalgia ओटायटिस्, ओट्याल्जिआ. |
| कर्णपाक | कुहतुल उझन | Suppuration in the ear सप्युरेशन इन् धी इअर. |
| पूतिकर्ण | | Fœtid discharge from the ear फिटिड् डिस्च्यार्ज फ्रॉम धी इअर. |
| क्रिमिकर्णक | दीदान उल उझन | Worms in ear वर्म्स इन् इअर. |
| कर्णशोथ | वरम उल उझन | Inflammation of the ear इन्फ्लमेशन ऑफ् धी इअर. |
| बाधिर्य | कर | Deafness डेफनेस्. |
| पीनस | | Ozœna ओझीना. |
| नासापाक | वश्र्‌र उल अनफ | Pustule in the Nose. पुस्चुल इन् धी नोझ. |
| क्षवथु | अतूस | Sneezing स्नीझिंग. |
| नासाशोष | जफाफ उल अनफ | Dryness of Nose ड्रायनेस ऑफ नोझ. |
| प्रतिश्याय | झुकाम | Catarrah or Cold in the Nose कटाऱ्ह ऑर कोल्ड इन् धी नोझ |
| अभिष्यन्द | दमआ | Ophthalmia ऑप्थाल्मिआ. |
| अक्षिपाक | रमद | |
| शिरोत्पात | सबल | Pannus पानस. |
| शुक्र | व्याज | Corneal Ulcer कॉर्नियल् अलसर. |
| पित्तविदग्ध-दृष्टि | जहर | Day Blindness, डे ब्लाइण्डनेस, Hemaralopia हिमरालोपिया. |

| | | |
|---|---|---|
| श्लेष्मविदग्ध-दृष्टि | अशा | Night Blindness, Nyctalopia नाइट ब्लाइण्डनेस, निक्टालोपिया. |
| अर्म | | Pterygium टेरिजियम्. |
| नेत्रनाडी | नासूर उल अइन् | Lachrymal Fistula ल्याक्रिमल फिस्च्युला. |
| लिङ्गनाश | नज्ञुल उल मेआ | Cataract क्याट्याऱ्याक्ट. |
| क्रिमिग्रन्थि | कुमल उल अजफान | Parasites प्यारेझाइट्स. |
| वर्त्मार्श | | Granular Conjunctivitis ग्रॅन्युलर कन्जन्क्टिव्हायटिस्. |
| अञ्जननामिका | | Stye स्टाय. |
| वातहतवर्त्म | इस्तिर्खाय् उल जुफ्न | Ptosis टोसीस. |
| निमेष | | Blepharosposm ब्लेफेरोस्प्याझम |
| कुञ्चन | इलतिसाक उल जुफ्न | |
| पक्ष्मकोप | शअर मुन्कलब | Trichiasis ट्रीकियासिस्. |
| उपपक्ष्म | शअर ज्ञायद | |
| पक्ष्मशात | इन्तशारउल अहदाब | Tinea Tarsi टिनिया टारसाय. |
| शिरःशूल | सुदाअ | Headache हेडेक. |
| अर्धावभेद | शकीका | Hemicrania हेमिक्रेनिआ. |
| रक्तप्रदर | इस्तहाजा | Menorrhagia मेनोऱ्हेजिआ. |
| श्वेतप्रदर | | Leucorrhea ल्युकोरिआ. |
| वंन्ध्यात्व | अक्र | Sterility, Barrenness स्टेरिलिटी, बॅरन्नेस. |
| योनिकन्द | | Vaginal Polypus व्हेजायनल पॉलिपस्. |
| गर्भस्राव | इस्कात हमल | Abortion, ॲबार्शन. |
| मूढगर्भ | | Difficult labour. डिफिकल्ट लेबर. |
| मक्कलशूल | | After pain आफटर् पेन. |
| स्तनरोग-कोप | | Mammary Inflammation म्यामरी इन्फ्रमेशन. |
| स्तन्यदुष्टि | | Diseased Milk डिझीझ्ड मिल्क. |
| सूतिकारोग | | Peurpural fever पॅरप्युरल फि. |
| गति | | Presentation प्रेझेंटेशन. |
| संकीलक | | Vertex. |
| प्रतिखुर | | Hands & feet हॅंडस ॲंड फीट. |
| बीजक | | Head willlothlaw. |

| | |
|---|---|
| | Transvense. |
| ग | Disseases of children.<br>डीझीझेस ऑफ चिल्ड्रन. |
| क | Ophthalunda in Children.<br>ऑफथॅलुंडा इन चिल्ड्रन. |
| र्भक | Pining पायनिंग. |
| टक | Eltretas एलट्रेटस. |
| विसर्प | Cellulits सेल्युलिट्स. |
| ापद् | Disease of Vagina.<br>डिझीझ ऑफ व्हजायना. |
| | Menstruation मेनस्ट्रुएशन. |
| ज्वर | Seasonal fever सीझनल फिवर. |
| वर | Perenneal fever. |

## मधुकोशव्याख्यायां प्रमाणत्वेन समुपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ॥



| | | | |
|---|---|---|---|
| अमरः २-५ | इति | ईशानदेवः ५०-४ | इति |
| चरकः ३-१८-४-५ | इत्यादि | भेडः ५२-२१ | ,, |
| सुश्रुतः ५-५ | ,, | नागभर्तृतन्त्रम् ५२-२३ | ,, |
| गदाधरः ६-६ | ,, | पराशरः ५४-१ | ,, |
| जेज्जटः ६-७ | ,, | स्मृतिशास्त्रम् ५४-२० | ,, |
| वररुचिः ६-९ | इति | चक्रः ६४-१९ | इत्यादि |
| भट्टारहरिचन्द्रः ६-१३, | इत्यादि | कार्तिककुण्डः ६४-२१ | ,, |
| न्यायदर्शनम् ७-१८, | इति | भट्टारहरिचन्द्रः ६४-२४ | ,, |
| तीसटाचार्यः ८-२६ | इति | चन्द्रिकाकारः ६४-२५ | इत्यादि |
| सुदान्तसेनः १०-१ | इत्यादि | जतुकर्णः ६५-७ | ,, |
| पराशरः ११-२४ | इति | अग्निवेशः ६८-२४ | ,, |
| हारीतः ११-२९ | इत्यादि | क्षारपाणिः ७६-२३ | ,, |
| ईश्वरसेनः १४-१३ | ,, | करवीराचार्यः ७८-५ | ,, |
| वृद्धवाग्भटः १६-१० | ,, | भोजः ८६-३० | ,, |
| वाप्यचन्द्रः १६-२५ | ,, | गौतमः ९५-२६ | इति |
| वाग्भटः २०-१५ | ,, | नागार्जुनः १०१-२६ | ,, |
| गदाधरः २०-२५ | ,, | वृद्धभोजः १०४-१५ | इति |
| पालकाप्यः २८-१५ | ,, | बकुलकरः १५२-७ | इत्यादि |
| हरिवंशः २९-८ | ,, | कामशास्त्रम् ३२४-१३ | ,, |
| वृद्धसुश्रुतः ३२-१५ | ,, | रविगुप्तः ४३३-१७ | ,, |
| कार्तिकः ३४-२५ | ,, | सात्यकिः ४४६-७ | इत्यादि |
| हारीतः ३७-१४ | ,, | कल्याणविनिश्चयः ४४७-४ | इति |
| भालुकितन्त्रम् ३९-९ | ,, | चक्षुष्यः ४४५-११ | ,, |
| दृढबलः ४०-८ | ,, | शालाक्यम् ४४८-९ | ,, |
| गयदासः ४२-९ | ,, | निमिः ४५१-३१ | ,, |
| विदेहः ४६-२१ | ,, | हिरण्याक्षः ४५६-११ | ,, |
| खरनादः ४९-२८ | ,, | आलम्बायनः ४८२-२१ | ,, |
| हरिचन्द्रः ४९-३३ | ,, | वृद्धकाश्यपः ४८४-५ | ,, |



# माधवनिदानान्तर्गतविषयाणामनुक्रमणिका।

## वातरक्तनिदानम्।

## मेदोरोगनिदानम्।



## उदरनिदानम्।



## शोथनिदानम्।

**मुखरोगनिदानम्।**

## कर्णरोगनिदानम् ।



## नासारोगनिदानम् ।

## शिरोरोगनिदानम्।



## असृग्दरनिदानम्।



## योनिव्यापन्निदानम्।



## योनिकन्दनिदानम्।

श्रीः

# मधुकोशातङ्कदर्पणाभ्यां सहितं

# माधवनिदानम् ।



## पञ्चनिदानलक्षणम् ।

प्रणम्य जगदुत्पत्तिस्थितिसंहारकारणम् ।
स्वर्गापवर्गयोर्द्वारं त्रैलोक्यशरणं शिवम् ॥ १ ॥

मधुकोशः ।

श्रीगणेशाय नमः ।

म० शशिरुचिरहरार्धव्यक्तसक्तार्धदेहो दिशतु घनघनाभः पद्मनाभः श्रियं वः ।
त्रिदशसरिदशीतद्योतजावारिमध्यभ्रमिभवमिव नाभौ वारिजं यस्य रेजे ॥ १ ॥
भट्टारजेज्जटगदाधरवाप्यचन्द्रश्रीचक्रपाणिबकुलेश्वरसेनभोजैः ।
ईशानकार्तिकसुकीरसुधीरवैद्यमैत्रेयमाधवमुखैर्लिखितं विचिन्त्य ॥ २ ॥
तन्त्रान्तराण्यपि विलोक्य ममैष यत्नः सद्भिर्विधेय इह दोषविधौ समाधिः ।
मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि ॥ ३ ॥
तत्तद्ग्रन्थतरुभ्यो व्याख्याकुसुमरसलेशमाहृत्य ।
भ्रमरेणेव मयाऽयं व्याख्यामधुकोश आरब्धः ॥ ४ ॥
उपयुक्तमिहानुक्तं निदानं माधवेन यत् ।
ग्रन्थव्याख्याप्रसङ्गेन मया तदपि लिख्यते ॥ ५ ॥

अथ प्रथितसर्वायुर्वेदबोधविशुद्धबुद्धिः श्रीमाधवकरो विकारनिकरहेलादितत्त्वबुभुत्सोत्सुकचिकित्सकजनानुजिघृक्षया विधित्सितग्रन्थसंदर्भारम्भे तत्प्रत्यूहव्यूहव्यपोहहेतुं परमाप्ताचारपरम्परापरिप्राप्तं स्वेष्टदेवताप्रणामं प्राक् प्राणैषीत्; ग्रन्थश्रोतॄणामपि[१] विश्वेश्वरमहेश्वरस्य प्रणामानुवादमात्रादपि विघ्नोपशमो भवतीत्यभिप्रायेण तं ग्रन्थादौ निबद्धवान्—प्रणम्येत्यादि । अत्र प्रशब्दो भक्त्यतिशयख्यापकः । निबन्धनक्रियापेक्षया प्रणामस्य पूर्वकालभावित्वात् प्रणमेः क्त्वाप्रत्ययः । जगच्छब्देनोत्पत्तिमन्तः क्षित्यादयोऽभिधीयन्ते; तेषामुत्पत्तौ स्वकारणसमवाये, स्थितौ कतिचित्कालावस्थाने, संहारे प्रध्वंसे, कारणं कर्तारम् । स्वर्गः सुखं, अपवर्गो मोक्ष आत्यन्तिकदुःखनिवृत्तिलक्षणः, तयोर्द्वारमुपायं प्रधानकारणम् । ए-

१ 'ग्रन्थाध्येतॄणामपि' ख. ।

तेन सकलपुरुषार्थहेतुत्वमुक्तं, सुखावाप्तिदुःखहानिव्यतिरिक्तस्य पुरुषार्थस्याभावात् । अत एव त्रैलोक्यशरणं त्रैलोक्यरक्षितारम् । न चोक्तजगत्स्थितिकारणत्वेन पौनरुक्त्यं, जगच्छब्देनोत्पत्तिमतामेवाभिधानात् । अत्र तु त्रैलोक्यशब्दो भुवनत्रयवर्तिचेतनाचेतनसमूहवाची, लोकशब्दस्य भुवनजनयोरभिधायकत्वात् । तथा चामरः,— "लोकस्तु भुवने जने"—इति। त्रैलोक्यमिति स्वार्थे ष्यञ्, चातुर्वर्ण्यवत्¹। हरादिपर्यायान् परित्यज्य शिवपदनिर्देशेन ग्रन्थस्य तदध्येतॄणां च सकलकल्याणमभिलषन् शिवपदं निबद्धवान्; शिवकारित्वेनैव महेश्वरस्य शिवपदाभिधानमिति ॥ १ ॥

**आतङ्कदर्पणः ।**

आ० तुलसीकुसुमं दधत्तमालप्रतिमं बल्लविगोपबालसक्तम् ।
किमपि त्रिभवैकमूलकन्दं परमानन्दमहं महः स्मरामि ॥ १ ॥
श्रीहम्मीरनरेश्वरः समभवत्प्रौढ²प्रतापानल-
ज्वालाजालकरालदग्धपवनप्राग्भारशुष्केन्धनः ।
यस्य प्रौढसभाङ्गणेष्वपि यशः स्वर्लोककल्लोलिनी-
कल्लोलामलमङ्गनाः सुमनसां गायन्ति रोमाञ्चिताः ॥ २ ॥
प्रत्यर्थिक्षितिनाथसार्थवनितावैधव्यदीक्षागुरोः
शौर्यं यस्य रणाङ्गणे सुरगणैः पश्यन् सुराणां पतिः ।
लब्ध्वा नेत्रसहस्रजं फलमलं स्मृत्वा निजाभ्यर्थितं
रामं रावणघातिनं च समभूत्तुष्टो विलक्षः पुनः ॥ ३ ॥
तस्याभवद्वैद्यवरः प्रभूतविश्वासपात्रं विदितश्चरित्रैः ।
प्रमोदनामा सकलप्रमोदी कलाविलासैकनिधिर्द्विजेन्द्रः ॥ ४ ॥
ज्येष्ठोऽभवत्तस्य सुतः प्रशस्तशास्त्रार्थवेत्ता शिवसक्तचेताः ।
रै³शर्मनामा प्रथितः कलाभिर्महम्मदक्षोणिपतेः सभायाम् ॥ ५ ॥
अन्यश्च तस्यास्ति सुतः कनीयान् वाचस्पतिः सत्त्वगुणैकसङ्गः ॥
सहोदरप्रीततमः समस्ता यो वैद्यविद्याः स्वयमध्यजीगपत् ॥ ६ ॥
⁴गुरुवचनविचारैश्चारुचञ्चच्चरित्रश्चरकचतुरचेताः सुश्रुते सुश्रुतो यः ।
कपिलमतवयस्ये ब्रह्मविद्यारहस्ये प्रकटितपटुबुद्धिर्बुद्धकाणादसिद्धिः ॥ ७ ॥
तेनोज्ज्वला विवृतिरल्पधियां हिताय संबध्यते विबुधमाधवसंग्रहस्य ।
विज्ञाय तार्किकवरैकविचारवेद्यं वैषम्यगुम्फनवशान्मधुकोपबन्धम् ॥ ८ ॥

**आ०** तत्र ग्रन्थारम्भे प्रारब्धग्रन्थपरिसमाप्त्यर्थं ग्रन्थश्रोतॄणामपि प्रत्यूहव्यूहव्युदासार्थं शिष्टाचारपरिपालनार्थं ग्रन्थकारः प्राग्विशिष्टेष्टदेवताप्रणामं निबद्धवान्—**प्रणम्येत्यादि ।** युग्मम् । मया रोगविनिश्चयो ग्रन्थो निबध्यत इति संबन्धः। किं कृत्वा? प्रणम्य। अत्र प्रकर्षार्थद्योतकेन प्रशब्देन ग्रन्थकृद्भक्त्यतिशयं ख्यापयति । कं? शिवम्। सकलभुवनपतेर्महेश्व-

---

१ 'चत्वारो वर्णाश्चातुर्वर्ण्यं' इति क. पुस्तकेऽधिकः पाठः। २ 'वीरप्रतापानल°' इति पाठान्तरम् । ३ 'सौशर्मनामा' इति पाठान्तरम् । ४ 'गुरुवचन°' इति पाठान्तरम् ।

रस्य नामबाहुल्येऽपि तदध्यापकाध्येतॄणां कल्याणमभिलषन् ग्रन्थकारः शिवपदं निबद्धवान्। कीदृशं शिवं? जगदुत्पत्तिस्थितिसंहारकारणम् । जगच्छब्देनोत्पत्तिमन्तः पृथिव्यादयोऽभिधीयन्ते; तेषामुत्पत्तौ स्वकारणसमवाये, स्थितौ कतिचित्कालावस्थाने, संहारे संहरणे, कारणं हेतुम् । पुनः कीदृशं? स्वर्गापवर्गयोर्द्वारं; स्वर्गः सुखं, अपवर्गो मोक्षः, तयोर्द्वार उपायं प्रधानकारणम् । पुनः कीदृशं? त्रैलोक्यशरणं भुवनत्रयस्य रक्षितारम् ॥ १ ॥

**नानामुनीनां वचनैरिदानीं समासतः सद्भिषजां नियोगात् ।**
**सोपद्रवारिष्टनिदानलिङ्गो निबध्यते रोगविनिश्चयोऽयम् ॥ २ ॥**
**नानातन्त्रविहीनानां भिषजामल्पमेधसाम् ।**
**सुखं विज्ञातुमातङ्कमयमेव भविष्यति ॥ ३ ॥**

**म०** अभिधेयसंबन्धप्रयोजनोपदेशमन्तरेण प्रेक्षावतां न प्रवृत्तिः स्यात्, इत्यतस्तदभिधानार्थं श्लोकद्वयमाह—नानेत्यादि । रोगाणां विशेषेण वातजत्वादिसाध्यासाध्यत्वादिरूपेण निश्चयो ज्ञानं येन स रोगविनिश्चयो ग्रन्थो निबध्यतेऽभिधीयते, 'अस्माभिः' इति शेषः । तस्य विशेषणं–सोपद्रवेत्यादि ।—सह उपद्रवादिभिर्वर्तते यः स तथा । एतेन विशेषणद्वारेण उपद्रवारिष्टनिदानलिङ्गस्वरूपमभिधेयमुक्तं भवति, एतद्व्यतिरिक्तस्याभिधेयस्याभावात् । तथा सति उपद्रवादिभिरभिधेयैः सह ग्रन्थस्य वाच्यवाचकलक्षणः संबन्धोऽप्यभिहितः । तत्र, उपद्रवो रोगारम्भकदोषप्रकोपजन्योऽन्यविकारः, उक्तं च चरके,—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमाविरोधी च स उपद्रव उच्यते"–इति; नियतमरणख्यापकं लिङ्गमरिष्टं; निदानं रोगोत्पादको हेतुः; लिङ्गं रोगख्यापको हेतुः । तेन 'लिङ्ग्यन्ते ज्ञायन्ते व्याधयोऽनेन' इति व्युत्पत्त्या पूर्वरूपरूपोपशयसंप्राप्तयोऽभिधीयन्ते । यद्यपि निदानमपि रोगविशेषं बोधयति, तथाऽप्युत्पत्तिज्ञप्तिहेतुत्वेन कारणद्वैविध्यप्रतिपादनार्थं तस्य पृथगभिधानम् । एषां चोपद्रवादीनां विस्तराभिधानं यथावसरं करिष्यते । ननु, रोगनिदानादितत्त्वमतिसूक्ष्मत्वेनासर्वज्ञस्य न ज्ञानविषयः, तत्कथं तदुपदेशे प्रेक्षावतां प्रवृत्तिरित्यत आह—नानामुनीनामित्यादि । एतेन ग्रन्थस्य प्रामाण्यं प्रवृत्त्यङ्गत्वमुक्तं भवति; मुनयो हि तपोयोगर्धिबलात्त्रैकालिकनिखिलज्ञानशालिनः पुरुषातिशया उच्यन्ते । ननु, यद्येवंभूतः कस्यचिद्ग्रन्थोऽन्योऽप्यास्ते तेनैव व्यवहारसिद्धेः कृतकार्यत्वेनास्य निष्प्रयोजनता स्यादित्यत आह—इदानीमित्यादि ।—इदानीमस्माभिरेव प्राथम्येन नानामुनीनां वचनैरेवंविधो निबन्धः क्रियते । समासत इति संक्षेपतः । एतेनाल्पबुद्धीनामतिविस्तरत्वेनाप्रवृत्त्यङ्गतादोषः परिहृतो भवति । ननु, कृतेऽपि ग्रन्थेऽनुपादेयपुरुषप्रणीतत्वेन न कश्चिद्भिषक् प्रवर्तिष्यत इति ग्रन्थस्य वैयर्थ्यं स्या-

---

१ 'वातादिजत्व°' इति ख. । २ 'एतेनास्य विशेषणद्वारा' इति क. ख. । ३ 'एतद्व्यतिरेकेणास्य ग्रन्थस्य' इति क. 'एतद्व्यतिरेकेणाभिधेयाभावात्' ख. । ४ 'सति' इति क. पुस्तके न विद्यते । ५ 'प्रथमं' इति क. ।

दित्यत आह—सद्भिषजां नियोगादिति । नियोगो नियोजनं 'अस्मदुपकाराय ग्रन्थः क्रियतां' इत्येवं प्रार्थनेत्यर्थः; अथवा नियोग आज्ञा, एतेनात्मनः सविनयत्वमुक्तं भवतीत्यर्थः । [1]नानातन्त्रेत्यादि । सुखं यथा भवति तथा आतङ्कं रोगं विज्ञातुमयमेव ग्रन्थो भविष्यति, 'कारणं' इति शेषः । एतेन रोगज्ञानं प्रयोजनमित्युक्तं, फलं चास्य चिकित्सितमिति मन्तव्यम् । यदुक्तं चरके,—"रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्"—इति ( च. सू. स्था. अ. २० ) । ननु, नानामुनीनां वचनैरेव रोगज्ञानं भविष्यति, किमनेन तदुपजीविना ग्रन्थेनेत्यत आह—अल्पमेधसामिति । अल्पमेधसां अल्पबुद्धीनां; महाबुद्धयो हि अतिविस्तरदुरधिगमनानातन्त्राध्ययनक्षमा भवन्ति न त्वल्पबुद्धय इति । महाधियामप्यालस्यानासादितदुरुपपादाशेषसंहितानामयमेव रोगज्ञानाय भविष्यतीत्याह—नानातन्त्रेत्यादि ॥ २ ॥ ३ ॥

**आ० नानामुनीनामित्यादि ।** अयं रोगविनिश्चयो ग्रन्थो निबध्यते विधीयते, रोगाणां विनिश्चयो ज्ञानं यस्मात्स तथा । किंविशिष्टः ? सोपद्रवारिष्टनिदानलिङ्गः; सहोपद्रवादिभिर्वर्तत इति सोपद्रवः, उपद्रवो रोगारम्भकदोषप्रकोपजन्यो विकारः । उक्तं च चरके—"व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः । उपक्रमाविरोधी च स उपद्रव उच्यते ॥"—इति; नियतमरणख्यापकं लिङ्गमरिष्टं; निदानं रोगोत्पादको हेतुः, निश्चीयते प्रतिपाद्यते व्याधिरनेनेति निदानं; लिङ्गं रोगख्यापको हेतुः, तेन लिङ्ग्यते ज्ञायतेऽनेनेति व्युत्पत्त्या पूर्वरूपरूपोपशयसंप्राप्तयो विज्ञायन्त इति । ननु, सर्वज्ञज्ञानविषये परमसूक्ष्मनिदानादितत्त्वज्ञानेऽसर्वज्ञपुरुषवाक्यैः कथं बुद्धिमतां प्रवृत्तिरित्यत आह—नानामुनीनां वचनैरिति । योगर्धिबलात्त्रैकालिकज्ञानदर्शी पुरुषातिशयो मुनिरुच्यते । इदानीमिति—अस्माभिरेव प्राधान्येन नानामुनीनां वचनैरेवंविधो ग्रन्थः क्रियते; अन्यैराचार्यैरेवंविधो ग्रन्थो न कृत इत्यर्थः । समासत इति संक्षेपात् । ननु, कृतेऽपि ग्रन्थे न कश्चिद्भिषक् प्रवर्तिष्यत इति ग्रन्थस्य वैयर्थ्यं स्यादित्यत आह–सद्भिषजां नियोगादिति ।—नियोगो नियोजनं, अस्मदुपकाराय ग्रन्थः क्रियतामेवंभूता प्रार्थनेत्यर्थः ग्रन्थस्यास्योत्[2]कृष्टत्वमाह–नानेत्यादि । महाबुद्धयो हि दुरधिगमतन्त्राध्ययनक्षमा भवन्ति, अतो नानातन्त्रविहीनानामल्पबुद्धीनां भिषजा सुखं यथा भवति तथा आतङ्कं रोगं विज्ञातुमयमेव ग्रन्थो भविष्यतीति; 'कारणं' इति शेषः । उक्तं च,—"रोगज्ञानार्थमेवादौ यत्नः कार्यो भिषग्वरैः । सति तस्मिन् क्रियारम्भः पुण्याय यशसे श्रियै ॥ रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् । ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्—" इति ॥ २ ॥ ३ ॥

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।**
**संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ ४ ॥**

**म०** व्याधेर्ज्ञातव्यस्य पञ्च ज्ञानोपाया भवन्तीति तानाह—निदानमित्यादि । एते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः । न च समस्तपक्षे कृतकरणत्वं वाच्यं, [3]प्रमा-

१ 'ननु, नानामुनिवचनबाहुल्यादल्पमेधसां कथं प्रवृत्तिरित्यत आह'—इति कपुस्तकेऽधिकः पाठः । २ '°स्योत्कर्षमाह' इति पाठान्तरम् । ३ प्रमाणसंप्लवस्यापि दृष्टत्वा-

णसंप्लवस्यापि दृष्टत्वात् । न यो ह्यनुमानेन प्रतीतो वह्निः स एव प्रत्यक्षागमाभ्यां नोपलभ्यते । न वा निदानादीनि प्रेक्षावन्तो ये नैवमालोचयेयुः । एकेनैवं प्रतिपादितो व्याधिरिति वयमिहोदास्महे । किंच एकेन प्रतिपादितेऽपि व्याधावपरेऽवश्यमभिधातव्याः, भिन्नप्रयोजनत्वात् । तथाहि–यदि निदानं नोच्यते तदा तत्परिवर्जनं कथं लभ्येत । उक्तं हि सुश्रुते,–"संक्षेपतः क्रियायोगो निदानपरिवर्जनम्"–इति ( सु. उ. तं. अ. १ ) । किंच यथा मृद्भक्षणात्पाण्डुरोगः, मक्षिकाभक्षणाच्च छर्दिरवसीयते; न च तथा निदानेन सर्वत्र नियतरोगाध्यवसायः, ज्वरगुल्मादीनामेककारणत्वात् । यदाह चरकः,–"एको हेतुरनेकस्य तथैकस्यैक एव हि । व्याधेरेकस्य वहवो बहूनां बहवस्तथा"–इति ( च. नि. स्था. अ. ८ ) । अपिच कदाचित्प्रत्यासन्नं निदानं बाधित्वा विप्रकृष्टनिदानकृतो दोषसंचयो व्याधिं कुर्यात्, तस्मात्केवलान्निदानान्न व्याधिज्ञानं भवतीति पूर्वरूपादीनामुपादानमिति वाप्यचन्द्रः । असति पूर्वरूपाभिधाने तत्रोक्तः क्रियाविशेषो न संगच्छते । उक्तं हि चरके,–"ज्वरस्य पूर्वरूपे लघ्वशनमपतर्पणं वा"–इति ( च. नि. स्था. अ. १ ) । तथा च सुश्रुते वातिकज्वरपूर्वरूपे घृतपानमिति । तथाऽसाध्यत्वं च नोपलभ्येत । उक्तं च चरके,—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्"–इति ( च. इं. स्था. अ. ५ ) । तथा रक्तपित्तप्रमेहयोर्विशेषज्ञानं च न जायते । उक्तं च चरके,–"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य हि पूर्वरूपैः । यो मूत्रयेत्तन्न वदेत्प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः"–इति ( च. चि. स्था. अ. ६ ) । असति रूपाभिधाने व्याधेरशेषेण स्वरूपमेव न व्यवच्छिद्यते; किंच साध्यासाध्यत्वं च न ज्ञायते । तथाहि सुखसाध्यलक्षणे चरकः,–"हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य वै । न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्"–इति ( च. सू. स्था. अ. १० ); कष्टसाध्यलक्षणे चरकः,–"निमित्तपूर्वरूपाणां रूपाणां मध्यमे वले"–इति ( च. सू. स्था. अ. १० ); तथा,—"सर्वसंपूर्णलक्षणः । सन्निपातज्वरोऽसाध्यः"—इति ( च. चि. स्था. अ. ३ ) । असत्युपशयाभिधाने संकीर्णलक्षणेऽनभिव्यक्तलक्षणे वा व्याधौ विशेषबोधो न स्यात् । तदुक्तं चरके,–"गूढलिङ्गं

दिति यतः प्रमातुः प्रमातव्येऽर्थे प्रमाणानां प्रत्यक्षानुमानोपमानशब्दानां संप्लवः समूहो दृष्टः, अतः समस्तपक्षे कृतकरणत्वं न च वाच्यम् ।

१ अनुमानेन प्रतीतो यो वह्निः स किं प्रत्यक्षागमाभ्यां नोपलभ्यते? नहि, अपि तूपलभ्यत एव । २ अथवा ये प्रेक्षावन्तस्ते निदानादीनि न एवं आलोचयेयुः? न, अपितु सन्ति निदानादीनीति आलोचयेयुरेव । ३ निदानादीनां मध्ये केनचिदेकेनैव प्रतिपादितो व्याधिरिति मतं वयमिहोदास्महे न श्रद्दध्महे । ४ 'चानेको बहूनां बहवोऽपि च'इति चरके पाठः । ५ 'तत्र पूर्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणं वा' इति चरके पाठः । ६ "ज्वरस्य पूर्वरूपेषु वर्तमानेषु बुद्धिमान् । पाययेत घृतं स्वच्छं ततः स लभते सुखं"–इति ( सु. उ. तं. अ. ३९ ) सुश्रुतः । ७ 'अशेषविशेषेण' क. ख. ।

व्याधिमुपशयानुपशयाभ्यां"–( परीक्षेत ) इति (च. वि. स्था. अ. ४)। असत्यां च संप्राप्तौ पूर्वरूपादिप्रतीतस्यापि व्याधेश्चिकित्सोपयोगिनोंऽशांशविकल्पनाबलकालादेरप्रतीतेश्चिकित्साविशेषो न स्यात्। तस्मात्पञ्चापि निदानादयो वक्तव्याः। पञ्चविधमप्येतद्व्याध्युत्पत्तिज्ञप्तिहेतुभूतं निदानशब्देनोच्यते। यदाह सुश्रुतः,–"हेतुलक्षणनिर्देशान्निदानानि"–इति (सु. सू. स्था. अ. ३)। तत्रैवं निदानशब्दनिरुक्तिः,—'निर्दिश्यते व्याधिरनेनेति निदानं'; "दिशेः पृषोदरादित्वाद्रूपसिद्धिः"–इति गदाधरः; "निश्चित्य दीयते प्रतिपाद्यते व्याधिरनेनेति निदानं"–इति जेज्जटः। भट्टारहरिचन्द्रेणापि तन्त्रयुक्त्या निदानादिविवरणप्रस्तावे एषैव निरुक्तिरुक्ता। निशब्दो निश्चये। तथा च वररुचेरुपसर्गसूत्रं,–"नि निश्चयनिषेधयोः"–इति। लोकेऽपि 'अद्य ते निदानं करिष्यामि' इत्युक्ते निश्चयं करिष्यामीत्यवगम्यते। निदानमिति करणे ल्युट्; तेन 'व्याधिनिश्चयकरणं निदानं' इति निदानादिपञ्चकसामान्यलक्षणम्। निदानशब्दोऽयं निदानविशेषे जातौ च वर्तते; यथा–तृणशब्दः तृणविशेषे तृणजातौ च वर्तते। यत्तु, भट्टारहरिचन्द्रेण निदानस्थाने–"या गौः सुदोहा भवति न तां निदधीत"–इति व्यासप्रयोगमुपन्यस्य निबन्धार्थो निदानशब्दो व्याख्यातः 'निदीयते निबध्यते हेत्वादिसंबद्धो व्याधिरनेन' इति कृत्वा, तत्तु निदानस्थानरूपग्रन्थाभिप्रायेण, नहि हेत्वादयो हेत्वादिसंबद्धं व्याधिं प्रतिपादयन्ति ॥ ४ ॥

**आ०** तस्य च व्याधेर्ज्ञातव्यस्य पञ्च ज्ञानोपाया भवन्ति तानाह–निदानमित्यादि। निदानं पूर्वरूपं रूपमुपशयः संप्राप्तिश्चैते पञ्च व्यस्ताः समस्ताश्च व्याधिबोधकाः। रोगाणां विज्ञानं विशिष्टज्ञानं, पञ्चधा पञ्चप्रकारेण, स्मृतं कथितं, 'मुनीन्द्रैः' इति शेषः। उपशयस्तथेति[2] तथाशब्दस्तुल्यकक्ष्यतां द्योतयति, एवं संप्राप्तिश्चेत्यत्र चकारोऽपि। इति परिसमाप्तौ। तच्च निदानं सन्निकृष्टविप्रकृष्टभेदेन द्विधा भवति। सन्निकृष्टं यथा—वातादयः कुपिताः ज्वरादिरोगमुत्पादयन्ति। विप्रकृष्टं यथा–हेमन्ते निचितः श्लेष्मा वसन्ते च प्रकुप्यति; तथाऽऽहारादिरपि, तत्र कट्वकाम्लदध्यादिकं पित्तज्वरस्य। पूर्वरूपं यथा—ज्वरस्यैवालस्यादयः। रूपं यथा–स्वेदावरोध इत्यादि; "आगमापगमक्षोभकाठिन्यमृदुतोष्मणाम्[3]। वैषम्यं तत्र तत्राङ्गे तास्ताः स्युर्वेदनाश्चलात्"–इत्यादि च। उपशयो यथा–वातः स्नेहनमर्दनादिनोपशान्त उपलभ्यते स उपशय इत्युच्यते। संप्राप्तिर्यथा–यथा दुष्टेनेत्यादिलक्षणात्। नन्वेकेनैव रोगनिश्चयेऽन्येषामुपादानं व्यर्थ? उच्यते—भिन्नप्रयोजनत्वान्नान्यतरवैयर्थ्यम्। तच्च यथा–निदानेनाधिगतस्य व्याधेस्तत्परिवर्जनं; उक्तं च सुश्रुते–"संक्षेपतः क्रियायोगो निदानपरिवर्जनम्"—इति। पूर्वरूपेण व्याधेर्विशेषज्ञानं जायते। यथा चरके,–"हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य च पूर्वरूपैः। यो मूत्रयेत्तं न वदेत्प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः"–इति; तथाऽधिगतस्य व्याधेस्तत्रोक्तक्रियाक्रमश्च लक्ष्यते; उक्तं च चरके–"ज्वरस्य पूर्वरूपे लघ्वशनमपतर्पणं वा"–इति; तथा च सुश्रुते,–"वातिकज्वरपूर्वरूपे घृतपानम्"—इति। तथा च साध्यासाध्यत्वमपि ज्ञायते। उक्तं च

---

१ स्वात्मनि क्रियाविरोधादित्यर्थः। २ यथा निदानपूर्वरूपरूपाणि रोगाणां विज्ञानाय तथोपशयोऽपीति। ३ 'मृदुता वेदनोष्मणाम्' इति पाठान्तरम्।

चरके—"पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया । यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ अन्यस्यापि च रोगस्य पूर्वरूपाणि यं नरम् । विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्"—इति । रूपेणापि च व्याधेः सुखसाध्यत्वं कष्टसाध्यत्वमसाध्यत्वं च ज्ञायते; यतोऽल्परूपः सुखसाध्यो व्याधिः, मध्यरूपः कष्टसाध्यः, संपूर्णरूपस्त्वसाध्य इति । तथा च सुखसाध्यलक्षणे चरकः,—"हेतवः पूर्वरूपाणि रूपाण्यल्पानि यस्य च । न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्"—इति; कष्टसाध्यलक्षणे चरकः,—"निमित्तपूर्वरूपाणां रूपाणां मध्यमे बले" इति; तथा "सर्वसंपूर्णलक्षणः संनिपातज्वरोऽसाध्यः"—इति । उपशयेन विना प्रतीतस्य व्याधेः संकीर्णलक्षणेऽनभिव्यक्तलक्षणे वा व्याधौ विशेषावबोधो न स्यात्, उक्तं हि चरके,—"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां बुध्येत"—इति । तथा च सुश्रुते,—"अभ्यङ्गस्नेहस्वेदाद्यैर्वातरोगो न शाम्यति । विकारस्तत्र विज्ञेयो दुष्टमत्रास्ति शोणितम्"—इति । शोणितसेकस्तत्रोपशम इति । असत्यां च संप्राप्तौ पूर्वरूपादिभिः प्रतीतस्यापि व्याधेश्चिकित्सितोपयोग्यंशांशविकल्पबलकालादीनामज्ञाने चिकित्साविशेषो न स्यात्, तस्मान्निदानादिपञ्चकविज्ञानेन सर्वे रोगा विशेषेणावबुध्यन्त इति ॥ ४ ॥

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।**
**निदानमाहुः पर्यायैः**

**म०** एषां निदानादीनां मध्ये समानासमानजातीयव्यावर्तकं कारणरूपनिदानस्य लक्षणमाह—निमित्तेत्यादिना पर्यायैरित्यन्तेन । एतैः शब्दैर्योऽर्थोऽभिधीयते तन्निदानं; यथा—"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" (न्या. द. प्र. आ. सू. १५)। ननु, किं मिलितैरेकैकशो वा ? नाद्यः, एकार्थाभिधायिनां शब्दानां मिलितानामप्रयोगात्; द्वितीयश्चेत्तदा सव्यभिचारः, निमित्तस्य शकुनादौ, हेतोः प्रयोजके कर्तरि, आयतनस्य स्थाने, प्रत्ययस्य लडादौ, उत्थानस्य उद्गमनोत्सर्गयोश्च[1] दर्शनात्[2] । नैवं, शकुनादीनां निमित्तादिभिः सर्वैरनभिधानात् । अत एवाह—पर्यायैरिति । नहि तेषां ते पर्यायाः, यतः क्रमेणैकार्थवाचकाः शब्दाः परस्परं पर्याया उच्यन्ते । तस्मान्निमित्तादिशब्दैः पर्यायैरभिधीयमानत्वं[3] निदानत्वम् । एतच्च पर्यायकथनं शास्त्रे व्यवहारार्थम् । इदं तु संक्षेपतो लक्षणं—'सेतिकर्तव्यताको रोगोत्पादकहेतुर्निदानं' इति । यन्मते दोषेतिकर्तव्यतारूपा संप्राप्तिरिष्यते तन्मते संप्राप्तिव्युदासार्थं 'सेतिकर्तव्यताक' इति पदं, तस्या दोषेतिकर्तव्यतारूपायाः[4] इतिकर्तव्यतान्तराभावात् । यन्मते व्याधिजन्म संप्राप्तिः, तन्मते 'व्याध्युत्पत्तिहेतुर्निदानं' इति लक्षणम् । उभयत्रापि 'उत्पत्ति'पदं ज्ञप्तिहेतुपूर्वरूपादिव्यवच्छेदार्थम् । स च हेतुरनेकधा; तत्र प्रथमं चतुर्विधः, यदाह उपकल्पनीयाध्याये हरिचन्द्रः,—"सन्निकृष्टविप्रकृष्टव्यभिचारिप्राधानिकभेदाच्चतुर्धा"—इति । सन्निकृष्टो यथा—नक्तंदिनर्तुभुक्तांशा

---

१ 'धूमवत्वादित्यादिवचने' इति क. । २ 'उद्गमनोत्सवयोः' इति क. । ३ 'पर्यायेण' क. ख. । ४ 'तस्यां दोषेतिकर्तव्यतारूपायां' क. । इतिकर्तव्यतान्तराभावादिति इति कर्तव्यता व्यापारः, इतिकर्तव्यतान्तरस्य व्यापारान्तरस्याभावात्, व्यापारे व्यापारान्तरं न तिष्ठतीति भावः ।

दोषप्रकोपस्य हेतवः, न ते चयादिकमपेक्षन्ते । विप्रकृष्टो यथा—"हेमन्ते निचितः श्लेष्मा वसन्ते कफरोगकृत्"; किंवा[1] सन्निकृष्टो ज्वरस्य रूक्षादिसेवा, विप्रकृष्टो रुद्रकोपः । व्यभिचारी यथा-यो दुर्बलत्वाद्व्याधिकरणासमर्थः । यदाह चरकः,-"( निदानादिविशेषा )अबलीयांसोऽथवानुबध्नन्ति, न तदा विकाराभिनिर्वृत्तिः"-इति ( च. नि. स्था. अ. ४ ) । प्राधानिको यथा—विषादिः; त्रिविधो वा, असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामभेदात् । तत्र, असात्म्येन्द्रियार्थसंयोगोऽयोगातियोगमिथ्यायोगयुक्ता रूपरसादयः, प्रज्ञापराधो मिथ्याज्ञानादिः, परिणामो अयोगादियुक्ता ऋतुस्वभावजाः शीतादयः । "अधर्मस्य च रोगहेतोरत्रैवान्तर्भावः"-इति भट्टारहरिचन्द्रः, तस्यापि कालान्तरपरिणतस्य दुःखकर्तृत्वात् । चक्रस्तु प्रज्ञापराधे तस्यान्तर्भावमाह; मिथ्याज्ञानकृतब्रह्मवधादिजन्मनोऽधर्मस्य प्रज्ञापराध एव मूलं; बलाबलं त्वत्र[2] न निरूप्यते, रोगकारणत्वेनाधर्मस्य सर्वथा सिद्धत्वादिति । दोषव्याध्युभयहेतुभेदाच्च स त्रिविधः । दोषहेतवो यथा—चयप्रकोपप्रशमनिमित्ता यथर्तूत्पन्ना मधुरादयः । व्याधिहेतवो यथा—मृद्भक्षणं पाण्डुरोगस्य कारणम् । यद्यपि मृदपि दोषं प्रकोपयत्येव; यदुक्तं चरके,-"कषाया मारुतं पित्तमुषरा मधुरा कफम्"-इति ( च. चि. स्था. अ. १६ ); तथापि तज्जैर्दोषैः पाण्डुरोग एवारभ्यते न त्वन्यो विकार इति व्याधिहेतुता भवति । उभयहेतुर्यथा—वातरक्ते,-"हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च"-इत्यादि ( सु. नि. स्था. अ. १ ) । तत्र यद्यपि दोषप्रकोपपूर्वकमेव व्याधिजननं, तथापि दोषवद्व्याधावपि तस्य कारणत्वमिति बोधयति । तेन तत्र न व्याधिहरमात्रं भेषजं प्रयोज्यं किंतूभयप्रत्यनीकम् । न च वाच्यं कारणभूतदोषनिवृत्त्यैव कार्यभूतस्य व्याधेर्निवृत्तिरिति; यतः प्रतिनियतशक्तिकानि भेषजद्रव्याणि भवन्ति; कथमन्यथा श्लैष्मिकतिमिरे श्लेष्महरमेव वमनं न प्रयुज्यते । यदुक्तं सुश्रुते,-"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीडितम्"-इति ( सु. चि. स्था. अ. ३३ ) । स एवोत्पादकव्यञ्जकभेदाच्च द्विधा । तत्रोत्पादको यथा—हेमन्तजो मधुररसः कफस्य । व्यञ्जको यथा- तस्यैव कफस्य[3] व्यञ्जको वसन्ते सूर्यसन्तापः-इति भट्टारहरिचन्द्रः । तत्र व्यञ्जकः प्रेरक[4] इत्यर्थः । बाह्याभ्यन्तरभेदाच्च द्विधा । तत्र बाह्या आहाराचारकालादयः । एतदभिप्रायेण तीसटाचार्यः,-"व्यायामादपतर्पणात्प्रपतनाद्भङ्गात्क्षयाज्जागराद्वेगानां च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेद्वायुर्वारिधरागमे परिणते चान्नेऽपराह्णेऽपि च ॥ कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसंपर्कतिलातसीदधिसुराशुक्तारनालादिभिः । भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां मध्याह्ने च तथाऽर्धरात्रिसमये पित्तं प्रकोपं व्रजेत् ॥ गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिष्प्रपूरैः । तुहिनपतनकाले श्लेष्मणः संप्रकोपः प्रभवति दिवसादौ भुक्तमात्रे वसन्ते" (चि.क.श्लो.२९-३१)-इति । आभ्यन्तरा यथा-

१ 'किंच' इति क. । २ 'बलाबलत्वं तत्र' इति क. 'बलाबलत्वमत्र च' ख. । ३ 'कफचयस्य' इति क. ख. । ४ 'अभिव्यक्तिकारकः' इति क. ख. ।

दोषा दूष्याश्च। तत्र, दोषोऽपि प्रकुपितः प्राकृतादिभेदादनेकधा। प्राकृतो यथा–वसन्ते श्लेष्मा, शरदि पित्तं, प्रावृषि वायुः। वैकृतस्तु यथा–वसन्ते पित्तं वायुर्वा, वर्षासु कफः पित्तं वा, शरदि कफो वायुर्वा। अस्य प्रयोजनं सुखसाध्यत्वादि। यदुक्तं चरके,–"प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः"–इत्यादि (च.चि.स्था.अ.३)। अनुबन्ध्यानुबन्धभेदाच्च द्विधा। अनुबन्ध्यः प्रधानं, अनुबन्धोऽप्रधानम्। यदाह चरकः,–"स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानोपशमो भवत्यनुबन्ध्यः, तद्विपरीतलक्षणस्त्वनुबन्धः"–इति (च. वि. स्था. अ. ६)। अस्य प्रयोजनं संसर्गजे व्याधावनुबन्ध्यो विशेषेण चिकित्स्योऽनुबन्धाविरोधेन। तदुक्तं चरके,–"तत्रोपद्रवस्य प्रायः प्रधानप्रशमात्प्रशमः"–इति (च. चि. स्था. अ. २१)। उपद्रवोऽनुबन्धः। प्रकृतिविकृतितो यथा–वातप्रकृतेर्वातरोगः कष्टसाध्यो भवति, कफपित्तप्रकृतेस्तु सुखसाध्यः। यदाह सुखसाध्यलक्षणे चरकः,–"न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्"–इति (च. सू. स्था. अ. १०)। आशयापकर्षतो यथा–यदा स्वमानस्थितमेव[1] दोषं स्वाशयादाकृष्य वायुः स्थानान्तरं गमयति तदा समानस्थोऽपि[2] स विकारं जनयति। यदाह चरकः,–"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये। स्थानादादाय गात्रेषु यत्र यत्र विसर्पति॥ तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः। गात्रदेशे भवत्यस्य श्रमो दौर्बल्यमेव च"–इति (च. सू. स्था. अ. १७)। अस्य प्रयोजनं वातस्यैव तत्र विगुणस्य स्वस्थानानयनं कार्यं, नतु पित्तस्य ह्रासनं[3]; "ये त्वेनां पित्तस्य स्थानाकृष्टिं न विदन्ति ते दाहोपलम्भेन पित्तवृद्धिं मन्यमानाः पित्तं ह्रासयन्तः पित्तक्षयलक्षणं रोगान्तरमेवोत्पादयन्त आतुरमतिपातयन्ति" इति भट्टारहरिचन्द्रः। अन्ये त्वाहुः–भ्राजकादिभेदेन सर्वदेहस्थिते पित्ते यदा स्वाशयाकृष्टं पित्तमवयवान्तरमनिलेन प्रापितं तदा तदवयवान्तरस्थं पित्तमागन्तुपित्तसंबन्धेनाधिकमेव जातं, ततश्च (पित्त)वृद्धिलक्षणैवेयं दुष्टिर्न दुष्ट्यन्तरं, अन्यथा दाह एव न स्यात्; नहि समानस्थो[4] दोषो विकारं जनयतीति। भट्टारहरिचन्द्रस्य त्वयमभिप्रायः–यद्यप्येवं तथापि चिकित्साभेदार्थं वृद्धिक्षयव्यतिरिक्तस्थानान्तरगतिरूपो दुष्टिविशेषोऽवश्यमेवैष्टव्यः, अन्यथा वृद्धं पित्तमिति मत्वा विरेचनं पित्तह्रासनं वा कार्यं, न च तत्तत्र योग्यं, किं तु स्वस्थानानयनम्। यच्चोक्तं चरकेण,–"क्षयः स्थानं च वृद्धिश्च विज्ञेया त्रिविधा गतिः"–(च. सू. स्था. अ. १७) इत्यादि तत्प्रायिकमिति। गतितो यथा–गतिर्दोषाणां क्षीणवृद्धत्वादयः। यदुक्तं चरके,–"क्षयः स्थानं च वृद्धिश्च दोषाणां त्रिविधा गतिः। ऊर्ध्वं चाधश्च तिर्यक्च विज्ञेया त्रिविधा परा॥ त्रिविधा चापरा कोष्ठशाखामर्मास्थिसन्धिषु"–इति (च. सू. स्था. अ. १७)। अत्र स्थानमिति समत्वम्। तत्र क्षयादिलक्षणं यथा,–"दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्। क्षीणा जहति स्वं लिङ्गं, समाः स्वं कर्म कुर्वते"–इति (च. सू. स्था. अ. १७)। स्वं लिङ्गमिति कुपितस्य वायो रौक्ष्यादयो धर्माः, कर्माणि च स्रंसशूलादीनि। यदाह

---

१ 'स्थानस्थितमेव' इति क. ख.। २ 'स्वमानस्थोऽपि' इति क. ख.। ३ 'नतु पित्तस्य ह्रासनेन स्वाशयापकर्षणं' इति क. ख.। ४ 'स्वमानस्थः' क. ख.।

चरकपाठसंवादी सुदान्तसेनः,–"आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्पप्रतोदाः, कण्ठध्वंसावसादौ श्रमकविलपनं स्रंसशूलप्रभेदाः । पारुष्यं कर्णनादो विषमपरिणतिभ्रंशदृष्टिप्रमोहा, विस्पन्दोद्वेष्टनानि ग्लपनमशयनं ताडनं पीडनं च ॥ नामोन्नामौ विषादो भ्रमपरिपतनं जृम्भणं रोमहर्षौ, विक्षेपाक्षेपशोषग्रहणशुषिरताच्छेदनं वेष्टनं च । वर्णः श्यावोऽरुणो वा तृडपि च महती स्वापविश्लेषसङ्गा, विद्यात्कर्माण्यमूनि प्रकुपितमरुतः स्यात्कषायो रसश्च ॥ विस्फोटाम्लकधूमकाः प्रलपनं स्वेदस्रुतिर्मूर्च्छनं, दौर्गन्ध्यं दरणं मदो विसरणं पाकोऽरतिस्तृड्भ्रमौ । ऊष्माऽतृप्तितमःप्रवेशदहनं कट्वम्लतिक्ता रसा, वर्णः पाण्डुविवर्जितः क्वथितता कर्माणि पित्तस्य वै ॥ तृप्तिस्तन्द्रा गुरुता स्तैमित्यं कठिनता मलाधिक्यम् । स्नेहापक्त्युपलेपाः शैत्यं कण्डूः प्रसेकश्च ॥ चिरकर्तृत्वं शोथो निद्राधिक्यं रसौ पटुस्वादू । वर्णः श्वेतोऽलसता कर्माणि कफस्य जानीयात् ॥ द्विदोषलिङ्गः संसर्गः सन्निपातस्त्रिलिङ्गकः"–इति । लिङ्गज्ञानप्रयोजनं च चिकित्साभेदार्थम् । यदाह सुश्रुतः,–"क्षीणा वर्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्याः"–इति ( सु. चि. स्था. अ. ३३ ) । ऊर्ध्वादिगतिर्यथा–ऊर्ध्वगं रक्तपित्तमित्यादि । अस्य प्रयोजनं रक्तपित्तस्योर्ध्वगस्य विरेचनं, अधोगस्य वमनम् । यथोक्तं चरके,–"प्रतिमार्गं च हरणं रक्तपित्ते विधीयते"–इति ( च. नि. स्था. अ. २ )। यस्तु गतिभेदानभिज्ञः स "विरेकः पित्तहराणां"–इति ( च. सू. स्था. अ. २५ ) वचनादधोगे रक्तपित्ते विरेकं प्रयुञ्जान आतुरस्यानर्थमेवोत्पादयति; ज्वरादिषु तिर्यग्दोषगतिषु यथोक्तं चिकित्सितमिति । वृद्धा दोषाः कदाचित्कोष्ठं कदाचिच्छाखाः कदाचिन्मर्मास्थिसन्धीनाश्रित्य रुजन्ति; मर्मास्थिसन्धिषु गतिः कृच्छ्रसाध्यत्वापादकत्वादेकत्वेन निर्दिष्टा । कोष्ठ आमाशयादिः, शाखा रक्तादयो धातवस्त्वक्चेति, चरककृतैवेयं संज्ञा । कोष्ठाद्यभिधानप्रयोजनं चिकित्साभेदार्थम् । यथोक्तं चरके,–"आमाशयगते वाते कफे पक्वाशयाश्रिते । रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च" ( च. सू. स्था. अ. १४ ); तथा,–"सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः"–( सु. उ. तं. अ. ३९ ) इत्यादि; तथा,–"नाभिकर्मोपदेष्टव्यं स्नायुमर्मव्रणेषु च"–इति । एते च दोषाः सामत्वनिरामत्वाभ्यामपि ज्ञातव्याः । यदुक्तं,–"ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ आमेन तेन संयुक्ता दोषा दूष्याश्च दूषिताः । सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ स्रोतोरोधबलभ्रंशगौरवानिलमूढताः । आलस्यापक्तिनिष्ठीवमलभेदारुचिक्लमाः ॥ लिङ्गं मलानां सामानां निरामाणां विपर्ययः । ( वा. सू. स्था. अ. १३ ) । वायुः सामो विबन्धाग्निसादतन्द्रान्त्रकूजनैः ॥ वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयेत् । विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् । स्नेहाद्यैर्वृद्धिमाप्नोति सूर्यमेघोदये निशि । निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः ॥ विपरीतगुणैः शान्तिं स्निग्धैर्याति विशेषतः । दुर्गन्धं हरितं श्यावं पित्तमम्लं स्थिरं गुरु ॥ अम्लिकाकण्ठ-

---

१ 'सुदत्तसेनः' इति क. । २ 'तक्रमविलपनं' इति क. । ३ 'भ्रमपरिसदनं' इति क.। ४ 'विशरणं' क. ख. ।

हृद्दाहकरं सामं विनिर्दिशेत् । आताम्रं पीतमत्युष्णं रसे कटुकमस्थिरम् ॥ पक्वं विगन्धं विज्ञेयं रुचिपक्तृबलप्रदम् । आविलस्तन्तुलस्त्यानः कण्ठदेशेऽवतिष्ठते । सामो बलासो दुर्गन्धः क्षुदुद्गारविघातकृत् ॥ फेनवान्पिण्डितः पाण्डुर्निःसारोऽगन्ध एव च । पक्वः स एव विज्ञेयश्छेदवान्वक्त्रशुद्धिकृत्"–इति । अस्य प्रयोजनं सामे पाचनं निरामे शमनमिति । एते च दोषाः परस्परसंबद्धास्तरतमादिभेदेन द्विषष्टिधा भवन्ति । तदुदाहरणानि विस्तरत्वापत्तेरत्र न लिख्यन्ते, सौश्रुतदोषभेदविकल्पाध्याये द्रष्टव्यानि । उक्तहेतुदोषभेदयोः संग्रहश्लोकौ—"चत्वारो व्यभिचारिदूरनिकटप्राधानिकत्वात्पुनस्तेऽसात्म्येन्द्रियकार्थयुक्परिणतिप्रज्ञापराधास्त्रिधा । रुग्दोषोभयकारणादपि तथा द्वौ व्यञ्जकोत्पादकौ, बाह्याभ्यन्तरभेदतोऽपि कथिता हेतोः प्रभेदा अमी ॥ दोषस्य च प्राकृतवैकृताभ्यां, भेदोऽनुबन्ध्यादपि चानुबन्धात् । तथा प्रकृत्यप्रकृतित्वयोगात्तथाशयाकर्षवशाद्गतेश्च" । इति निदानम् ॥–

आ० निदानस्य पर्यायशब्दानाह–निमित्तेत्यादि । पर्यायैरिति निमित्तादिभिः षड्भिरेव पर्यायैर्निदानमाहुः 'मुनयः' इति शेषः । एतच्च पर्यायकथनं शास्त्रे व्यवहाराय, तत्र तत्र शास्त्रप्रदेशे निदानमेतैः पर्यायैर्बोद्धव्यमिति । एकार्थवाचकाः शब्दाः परस्पर पर्याया उच्यन्ते ॥

**प्राग्रूपं येन लक्ष्यते ॥ ५ ॥**
**उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।**
**लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम्॥ ६ ॥**

म० निदानानन्तरीयकत्वात्पूर्वरूपादीनां तदनन्तरं प्राग्रूपमाह—प्राग्रूपमित्यादि । द्विविधं हि पूर्वरूपं भवति, सामान्यं विशिष्टं च । तत्र सामान्यं येन दोषदूष्यसंमूर्च्छनावस्थाजनितेन भाविज्वरादिव्याधिमात्रं प्रतीयते, न तु वातादिजनितत्वादिविशेषः । यथा,–'श्रमोऽरतिर्विवर्णत्वं'–इत्यादि ( मा. ज्व. नि. श्लो. ४ ); तथा देवगुरुविप्रद्वेषादि । सामान्याभिप्रायेणैव तन्त्रान्तरं,–"व्याधेर्जातिर्बुभूषा च पूर्वरूपेण लक्ष्यते । भावः किमात्मकत्वं च लक्ष्यते लक्षणेन हि"–इति । तथाऽऽह पराशरः,–"पूर्वरूपं नाम येन भाविव्याधिविशेषो लक्ष्यते न तु दोषविशेषः"–इति । विशिष्टं यथा–उरःक्षतादौ लिङ्गान्येव वातादिजान्यव्यक्तानि । यदुक्तं तत्रैव–"अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतं"–इति । तथा सुश्रुतः,–"सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफादन्नारुचिस्तथा"–इति ( सु. उ. तं. अ. ३९ ) । हारितेऽप्युक्तं,–"इति पूर्वरूपमष्टानां ज्वराणां सामान्यतः, विशेषतस्तु जृम्भाङ्गमर्द-

१ "यथायथं यद्यस्य व्याधेर्ज्वराद्यन्यतमस्य आत्मीयमात्मीयं; अतश्च प्राग्रूपं त्रिधा दृश्यते—किंचिच्छारीरं, किंचिन्मानसं, किंचिच्छारीरमानसं चेति । तत्र शारीरं यथा—ज्वरस्यालस्यास्यवैरस्यगात्रगौरवजृम्भासास्राकुलाक्षतेत्येवंप्रायं; मानसं च–अरतिर्हितोपदेशेष्वक्षान्तिरित्येवंप्रायं; किंचिच्छारीरमानसं यथा–प्रीतिरम्ले पटूषणे, द्वेषः स्वादुषु भक्ष्येष्वित्येवंप्रायं, शारीरमानसदोषजनितत्वात्" इति वाग्भटटीकायामरुणदत्तः ( वा. नि. स्था. अ. १ ) ।

**अप्सु चादर्शबिम्बे वा तस्य तद्रिष्टमादिशेत् ॥ ६२ ॥**
**त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वाऽपि वा जलम् ॥**
**जलत्रासं तु तं विद्याद्रिष्टं तदपि कीर्तितम् ॥ ६३ ॥**
**अदष्टो वा जलत्रासी न कथंचन सिद्ध्यति ॥**
**प्रसुप्तो वोत्थितो वापि स्वस्थस्त्रस्तो न सिद्ध्यति ॥ ६४ ॥**

**आ०** इदानीं श्वादिदष्टस्य रिष्टमाह–येनेत्यादि । चेष्टां क्रियां, रुतं शब्दं, बहु अनेकवारं, प्रतिकुर्वाणः अनुकुर्वन्, क्रियाहीनः स्वकीयकायादिव्यापाररहितः । इदानीमपरमप्यरिष्टं निर्दिशन्नाह–दंष्ट्रिणेत्यादि । तद्दंष्ट्रिरूपदर्शनमरिष्टं मरणलक्षणम् । पुनरपरमरिष्टं निर्दिशन्नाह–त्रसतीत्यादि । अकस्माज्जलत्रासहेतुं विना, अपिशब्दात् श्रुत्वाऽपि जलत्रासरोगं जानीयात्तस्येति संबन्धः । रिष्टमित्यादि तदपि जलत्रसनमरिष्टं मरणं कीर्तितम् । एतच्चारिष्टं दष्टस्य । अत्रार्थे तन्त्रान्तरे,–"व्याधितेन श्वादिना दष्टस्य श्लेष्मा कुपितः स्रोतोवाहिनीर्धमनीरनुप्रविश्य संज्ञानाशमापादयति । ततो नरः स्पृष्ट्वा श्रुत्वा च जलं त्रस्यति, तद्रिष्टं जानीयात्"–इति । एवमदष्टस्यापि त्रासो रिष्टमेवेति दर्शयन्नाह–अदष्ट इत्यादि । अस्मिन्नर्थे तन्त्रान्तरे–"अदष्टस्य जन्तोर्हि जलत्रासो भवेद्यदि । तस्यारिष्टं हि भिषजो ब्रुवते विषचिन्तकाः ॥ ज... जलत्रासो जायते श्लेष्मसंचयात्"–इति । अथ चोक्तम्–"बुद्धिस्थानं यदा श्लेष्मा ... प्रतिपद्यते । तदा बुद्धौ निरुद्धायां श्लेष्मणाऽधिष्ठितो नरः॥ जाग्रत्सुप्तोऽथवाऽऽत्मानं मज्जन्तमिव मन्यते । सलिलात्त्रस्यति तदा जलत्रासं तु तं विदुः ॥ श्लेष्मघ्नं तत्र कर्तव्यं शमनानि च । आहारस्य विधानेन यावत्स प्रकृतिं व्रजेत्"–इति । अयं जलत्रासः ... तकफस्य भवतीति रिष्टं न भवति । अत एवाऽत्र चिकित्सोपदेशः । दष्टस्य तु तथा स्वस्थस्य जाग्रतो वा जलमन्तरेण त्रासो रिष्टमेवेति दर्शयन्नाह–प्रसुप्त इत्यादि । एकसुगमम् ॥ ६१–६४ ॥ ग्मादयः ।

**प्रशान्तदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविड्‌कं ... रोगः ।**
**प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥**

**इति श्रीमाधवकरविरचिते माधवनिदाने विषनिदानं समाप्तम् ॥**

**म०** विषातुरः कीदृशो निर्विषो भवतीति दर्शयितुमाह—प्रशान्तदोषमित्यादि ॥ अन्नाभिकाममित्यनेन प्रकृतिस्थाग्निरुक्ता । यदाह चरकः,–"प्रायेणोपहताग्निश्च सपिच्छमतिसार्यते । प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति"–इति । सममूत्रविट्कमिति अक्षीणानतिरिक्तमूत्रपुरीषम् । 'अन्ये समसूत्रजिह्व' इति पठन्ति तदाऽयमर्थः–सममविकृतं सूत्रं जिह्वा च यस्य स तथा, एतेन विषजुष्टा जिह्वा रसबोधिनी भवति, सूत्रमपि जिह्वायां विषप्रभावेण वैकृतं भवतीति प्रतिपादयां जिह्वाग्रहणेनैव सूत्रग्रहणे सिद्धे, तस्य च रसग्रहणे अनुगुणत्वप्रतिपादनार्थं पृथगुपादानम् । अनेन श्लोकेन "समदोषः समाग्निश्च ( सु. सू. स्था. अ. ॥ १५ ) इत्यादिश्लोकस्य सकल एवार्थ उपबद्धः ॥ ६५ ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां विषनिदानं समाप्तम् ॥

सूक्तिमुक्तावलीग्रन्थे[2] गुरुणा यन्न गुम्फितम् ॥
मया समस्तमग्रन्थि तद्गिरा शुद्धियुक्तया[3] ॥ १ ॥

धिगुरुबद्धे दाम्नि वाङ्मलतीनां परमपरिमलश्रीधाम्नि लब्धावलम्बम् ॥
रति वचनकुन्दं मन्दसौरभ्यलेशाद्वचनमपि मदीयं किंचिदेतन् कदाचित् ॥ २ ॥

इति श्रीविजयरक्षितश्रीकण्ठदत्ताभ्यां विरचिता मधुकोशव्याख्या समाप्ता ॥

आ० अविषो नरः कीदृशो भवति तद्दर्शयितुमाह—प्रसन्नदोषमित्यादि । प्रसन्नदोषं ाभावस्थितवातादिकम् । प्रकृतिस्थधातुमिति दधतीति धातवो रसादयो मलादयश्च । न्नाभिकामं भोजनाभिलाषं, अन्नाभिकाममित्यनेन प्रकृतिस्थाग्नितोक्ता । यदाह चरकः— प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते । प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति"— ति । सममूत्रविट्कमिति अक्षीणानतिरिक्तमूत्रपुरीषम् । अन्ये "सममूलजिह्वम्" इति ठन्ति, तदायमर्थः—सममविकृतं मूलं जिह्वा च यस्य स तथा । एतेन विषदुष्टजिह्वा ·दिनी न भवति, मूलमपि जिह्वावत् विषप्रभावेण विकृतं भवतीति प्रतिपादयति । ह नैव मूलग्रहणे सिद्धे, तस्य रसग्रहणेऽर्धगुणत्वप्रतिपादनार्थं पृथगुपादानम् । ेकेन "समदोषः समाग्निश्च" इत्यादेः श्लोकस्य सकल एवार्थो निबद्धः । वैद्योऽ· विषं मनुष्यमिति उक्तलक्षणः पुरुषोऽविषो भवति, विपरीतलक्षणस्तु विषातुरः । हि—"प्रवृद्धदोषाऽप्रकृतिस्थधातुमनन्नकाङ्क्षं हतमूलजिह्वम् । विरुद्धवर्णेन्द्रियवित्तचेष्टं वगच्छेत्सविषं मनुष्यम्"—इति । इदं सविषाविषलक्षणमिति ॥ ५७ ॥

इति श्रीवाचस्पतिवैद्यविरचितायां माधवनिदानव्याख्यायामातङ्कदर्पणाख्यायां
विषनिदानम् ॥

---

१ अस्यायमेवेद्धः पाठः । २ 'गुम्फ' क. ३ 'शुद्धमुक्तया' क. ।

## अथ विषयानुक्रमणिका ।



आ० अस्मिन् ग्रन्थे रोगसंग्रहमाह—ज्वरातिसारावित्यादि[1] । ग्रहण्यश्चतस्र: स्मिन्नजीर्णनिदाने विसूचिकालसविलम्बिका ज्ञेयाः । पानात्ययादयः पानवि‍भ्र पिडकाः प्रमेहोक्ताः । मेदोदोषो[1] मेदोरोगः । उपदंशो मेढ्ररोगः, त्वगामयः कु रोमान्तो[2] मसूरिकाभेदः । आस्यं मुखम् । रुग्विनिश्चये अयमुद्देशः ॥ ९ ॥

सुभाषितं यत्र यदस्ति किंचित्तत्सर्वमेकीकृतमत्र यत्नात् ।
विनिश्चये सर्वरुजां नराणां श्रीमाधवेनेन्दुकरात्मजेन ॥ १०

यत्कृतं सुकृतं किंचित्कृत्वैवं रुग्विनिश्चयम् ।
मुञ्चन्तु जन्तवस्तेन नित्यमातङ्कसन्ततिम् ॥ ११ ॥

इति माधवकरविरचितं माधवनिदानं समाप्तम् ।

आ० ग्रन्थकारः स्वपक्षमाह—सुभाषितमित्यादि । सुगमम् ॥ १० ॥ ११ ॥

इति श्रीवाचस्पतिवैद्यविरचिता माधवनिदानटीकाऽऽन्तङ्कदर्पणाख्या समाप्ता ॥

---

१ एतादृशपाठाभिप्रायेण । २ अयमेवमेव पाठमङ्गीकरोति ।

# परिशिष्टम् ।

## अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्म स्नायुं विशोष्य च ॥ १ ॥
कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतद्युतिं बहिः ।
शनैः शनैः क्षताद्याति छेदात्कोपमुपैति च ॥ २ ॥
तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ।
स स्नायुकेति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ।
संकोचं खञ्जतां चैव छिन्नतन्तुः करोत्यसौ ॥ ४ ॥
श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहो-
श्वेतः श्लेष्मणा स्यात्पृथुगरिमयुतोऽथ द्विदोषो द्विलिङ्गी ।
रक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो
ऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः ॥ ५ ॥

इति स्नायुकनिदानं समाप्तम् ।

---

## अथ फिरङ्गरोगनिदानम् ।

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत् ।
स्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः ॥ १ ॥
न्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ।
फिरङ्गिनोऽङ्गसंसर्गात्फिरङ्गिण्याः प्रसंगतः ॥ २ ॥
धिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ।
वेत्तल्लक्षयेत्तेषां लक्षणैर्भिषजां वरः ॥ ३ ॥
रङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ।
हिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे ॥ ४ ॥
त्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक् ।
स्फुटितो व्रणवद्वैद्यैः सुखसाध्योऽपि सो मतः ॥ ५ ॥
सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ।
शोफं च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ॥ ६ ॥

कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता ।
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ॥ ७ ॥
बहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः ।
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥ ८
बहिरन्तर्भवश्चापि क्षीणस्योपद्रवैर्युतः ।
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥ ९ ॥

इति फिरङ्गनिदानं समाप्तम् ।

---

## अथ सोमरोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ।
अतिसारकयोगाद्वा गरयोगात्तथैव च ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि
प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ।
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ।
भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते क्वचित
संधारणाच्छरीरस्य ता आपः सोमसंज्ञित
ततः सोमक्षयात् स्त्रीणां सोमरोग इति स्

इति सोमरोगनिदानं समाप्तम् ॥

---

## अथ शीतलानिदानम् ।

देव्या शीतलयाक्रान्ता मसूर्यः शीतला बहिः ॥
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान्प्रचक्ष्म
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत्
सप्ताहान्निःसरत्येव सप्ताहात्पूर्णतां व्रजेत् ॥
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३

ष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ॥
। कश्चित्प्राह पक्वेति सा तु पाकं न गच्छति ॥ ४ ॥
शूकवदङ्गानि सा विध्यति विशेषतः ॥
हाद्वा दशाहाद्वा शान्ति याति विनौषधम् ॥ ५ ॥
णा तृष्मजारूपा सकण्डूः स्पर्शनप्रिया ॥
श्वा पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥ ६ ॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ॥
ग्नश्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ७ ॥
श्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ॥
ा भवति बालानां सुखं शुष्यति च स्वयम् ॥ ८ ॥
वज्जायते षष्ठी लोहितोत्तनमण्डला ॥
र्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥ ९ ॥
ानां मेलनादेषा बहुस्फोटापि दृश्यते ॥
स्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥ १० ॥

इति शीतलानिदानम् ।

